उष्णस्पर्शाभावाच्च । नापि जले, शीतस्पर्शाभावान्नीलरूपाश्रयत्वाच्च । नापि पृथिव्यां, गन्धवत्त्वाभावात्स्पर्शरहितत्वाच्च । तस्मात्तमो दशमद्रव्यमिति चेन्न । तमसस्तेजोऽभावरूपत्वात् । तथाहि—तमो हि न रूपवद्द्रव्यमालोकासहकृतचक्षुर्ग्राह्यत्वादालोकाभाववत् । रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात् । तस्मात्प्रौढप्रकाशकतेजःसामान्याभावस्तमः । तत्र नीलं तमश्चलतीति प्रत्ययो भ्रमः । अतो नव द्रव्याणीति सिद्धम् ॥

द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणम् ॥ लक्ष्यैकदेशावृत्तित्वमव्याप्तिः, यथा गोः कपिलत्वम् । अलक्ष्यवृत्तित्वमतिव्याप्तिः, यथा गोः शृङ्गित्वम् । लक्ष्यमात्रावर्तनमसंभवः यथा गोरेकशफत्वम् । एतद्दूषणत्रयरहितो धर्मो लक्षणम् । स एवासाधारणधर्म इत्युच्यते। लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम् । व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिवारणाय तद्भिन्नत्वं धर्मविशेषणं देयम्। व्यवहारस्यापि लक्षणप्रयोजनत्वे तु न देयम्, व्यावृत्तेरपि व्यवहारसाधनत्वात् ॥ ननु गुणवत्त्वं न द्रव्यसामान्यलक्षणम् । आद्यक्षणे उत्पन्नविनष्टद्रव्ये चाव्याप्तेरिति चेन्न । गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षितत्वात् ॥ नन्वेवमप्येकं रूपं रसात्पृथगिति व्यवहाराद्रूपादावतिव्याप्तिरिति चेन्न । एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकरणात् ॥

**न्या. बो.**—द्रव्याणि विभजते–पृथिवीति । नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैवेति । तथाहि नीलं तमश्चलतीति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च द्रव्यत्वं सिद्धम् । न च क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम् । आकाशादिपञ्चकस्य नीरूपत्वाद्वायोरपि नीरूपत्वान्न तेष्वन्तर्भावः । तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः ।

1 A F & Q. read रूपि for रूपवत्.

2 A F and Q here insert यथा गोः सास्नादिमत्त्वम्, while P and Y have यथा गोः सास्नादिमत्त्वे सति [illegible] but the words are [illegible] other copy.

3 *Nil.* notices लक्ष्यत्वे as *v. l.* for लक्षणत्वे, and remarks that the two readings are identical in sense.

4 M adds संयोगसमवायिकारणतावच्छेदकतया द्रव्यत्वजातिः.

जलतेजसोः शीतोष्णस्पर्शवत्त्वात् तयोरन्तर्भावः। तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेन्न। तमसस्तेजोऽभावत्वेनैवोपपत्तावतिरिक्तद्रव्यकल्पनायां मानाभावात्। न च विनिगमनाविरहात्तेज एवान्धकाराभावस्वरूपमिति वाच्यम्। तेजसोऽभावस्वरूपत्वे अनुभूतोष्णस्पर्शस्याश्रयबाधाद्द्रव्यान्तरकल्पने गौरवात्। तस्मादुष्णस्पर्शरूपगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम्। तमसि नीलरूपप्रतीतिस्तु भ्रान्तिरेव दीपापसरणक्रियाया एव तत्र भानात्॥

[ ४ ]

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिगुणाः॥

त. दी.—गुणं विभजते—रूपेति। द्रव्यकर्मभिन्नत्वे सति सामान्यवान्गुणः। गुणत्वजातिमान्वा। ननु लघुत्वमृदुत्वकठिनत्वादीनां विद्यमानत्वात्कथं चतुर्विंशतिगुणा इति चेन्न लघुत्वस्य गुरुत्वाभावरूपत्वात् मृदुत्वकठिनत्वयोरवयवसंयोगविशेषरूपत्वात्॥

[ ५ ]

उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि॥

त. दी.—कर्म विभजते—उत्क्षेपणेति। संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म। कर्मत्वजातिमद्वा॥ ननु भ्रमणादेरप्यतिरिक्तस्य कर्मणः सत्त्वात् पञ्चेत्यनुपपन्नमिति चेन्न। भ्रमणादीनामपि गमनेऽन्तर्भावान्न पञ्चविधत्वविरोधः॥

[ ६ ]

परमपरं चेति द्विविधं सामान्यम्॥

---

1 U. and W read स्पर्शाश्रयद्रव्यं.

2 U. has नीलरूपादि and W. adds एवं कर्मवत्ताप्रतीतिरपि.

3 N here adds सामान्यवानित्युक्ते द्रव्यकर्मणोरतिव्याप्तिरतस्तन्निरासार्थं द्रव्यकर्मभिन्नत्वे सतीति। द्रव्यकर्मभिन्न इत्युच्यमाने सामान्यादिष्वतिव्याप्तिरत उक्तं सामान्यवानिति; but the passage is neither noticed by *Nil.* nor found in any other copy.

4 A and F add एव after पञ्च.

5 Some Mss. omit this sentence.

त. दी.—सामान्यं विभजते—परमिति । परमधिकदेशवृत्ति। अपरं न्यूनदेशवृत्ति । सामान्यादिचतुष्टये जातिर्नास्ति ॥

[ ७ ]

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ॥

त. दी —विशेषं विभजते—नित्येति । पृथिव्यादिचतुष्टयस्य परमाणव आकाशादिपञ्चकं च नित्यद्रव्याणि ॥

[ ८ ]

समवायस्त्वेक एव ॥

त. दी.—समवायस्य भेदो नास्तीत्याह—समवायस्त्विति ॥

[ ९ ]

अभावश्चतुर्विधः । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥

त. दी.—अभावं विभजते—अभावेति ॥

[ १० ]

गन्धवती पृथिवी । सा द्विविधा नित्यानित्या च । नित्या परमाणुरूपा । अनित्या कार्यरूपा । पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ॥

त. दी.—तत्रोद्देशादिक्रमानुसारात्पृथिव्या लक्षणमाह—गन्धवतीति । नाम्ना पदार्थसंकीर्तनमुद्देशः । उद्देशक्रमे च सर्वत्रेच्छैव नियामिका । ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः। न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम् । अवयवगन्धस्यैव तत्र

1 A omits देश.

2 A D F K Q. W. and X add तत्र before गन्धवती; See Note *loc. cit.*

3 A and B add इति after च.

4 All copies except A B and F omit सा before पुनः; See Note *loc. cit.*

प्रतीतिसंभवेन चित्रगन्धानङ्गीकारात् ॥ किं चोत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्यैव विवक्षितत्वात्। ननु जलादावपि गन्धप्रतीतेरतिव्याप्तिरिति चेन्न अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात्। ननु तथापि कालस्य सर्वाधारतया सर्वेषां लक्षणानां कालेऽतिव्याप्तिरिति चेन्न सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धेन लक्षणस्याभिमतत्वात् ॥

पृथिवीं विभजते—**सा द्विविधेति**। नित्यत्वं ध्वंसाप्रतियोगित्वम्। ध्वंसप्रतियोगित्वमनित्यत्वम् ॥ प्रकारान्तरेण विभजते—**पुनरिति**। आत्मनो भोगायतनं शरीरम्। यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम्। सुखदुःखान्यतरसाक्षात्कारो भोगः ॥ शब्देतरोद्भूतविशेषगुणानाश्रयत्वेसति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम्। शरीरेन्द्रियभिन्नो विषयः ॥ एवं च गन्धवच्छरीरं पार्थिवशरीरम् गन्धवदिन्द्रियं पार्थिवेन्द्रियम् गन्धवान्विषयः पार्थिवविषय इति तत्तल्लक्षणं बोध्यम् ॥ पार्थिवशरीरं दर्शयति—**शरीरमिति**। पार्थिवेन्द्रियं दर्शयति—**इन्द्रियमिति**। **गन्धग्राहकमिति** प्रयोजनकथनम्। **घ्राणमिति** संज्ञा। **नासाग्रेत्याश्रयोक्तिः**। एवमुत्तरत्रापि ज्ञेयम्। पार्थिवविषयं दर्शयति—**विषयेति**॥

**न्या. बो.—गन्धवतीति**। गन्धवत्त्वं पृथिव्या लक्षणम्। लक्ष्या पृथिवी। पृथिवीत्वं लक्ष्यतावच्छेदकम्। यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः। यो धर्मो यस्यामवच्छेदकः सा तद्धर्मावच्छिन्ना लक्ष्यता। तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं, लक्ष्यता पृथिवीत्वावच्छिन्ना। एवं शीतस्पर्शादिलक्षणेषु जलादीनां लक्ष्यता जलत्वादीनां लक्ष्यतावच्छेकत्वं च बोध्यम् ॥

[११]

शीतस्पर्शवत्य आपः। ता द्विविधाः नित्या अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः कार्यरूपाः। पुनस्त्रिविधाः शरीरेन्द्रियवि-

1 A and B insert ताः before पुनः. See Note on ताः in the last preceding section.

पयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ॥

**त. दी.**—अपां लक्षणमाह—**शीतेति** । उत्पन्नविनष्टजलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्यम् । शीतं शिलातलमित्यादौ जलसंबन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः अन्यत्सर्वं पूर्वरीत्या व्याख्येयम् ॥

[ १२ ]

उष्णस्पर्शवत्तेजः । तद्द्विविधं नित्यमनित्यं च । नित्यं परमाणुरूपम् । अनित्यं कार्यरूपम् । पुनस्त्रिविधं शरीरेन्द्रियविषयभेदात् शरीरमादित्यलोके[1] । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति विषयश्चतुर्विधः । भौमदिव्यौदर्याकरजभेदात् । भौमं वन्ह्यादिकम् अविन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरौदर्यम् । आकरजं सुवर्णादि ॥

**त. दी.**—तेजसो लक्षणमाह—**उष्णस्पर्शवदिति** । उष्णं जलमिति प्रतीतिस्तेजःसंबन्धानुविधायित्वान्नातिव्याप्तिः । विषयं विभजते—**भौमेति** । ननु सुवर्णं पार्थिवं पीतत्वाद्गुरुत्वाद्धरिद्रादिवदिति चेन्न । अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाशादर्शनेन, जलमध्यस्थघृतादौ द्रवत्वनाशादर्शनेन, असति प्रतिबन्धके पार्थिवद्रव्यद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात् । सुवर्णस्यात्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वादिकरणत्वेन पार्थिवत्वानुपपत्तेः । तस्मात्पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः, रूपवत्तया वाय्वादिष्वनन्तर्भावात्, तैजसत्वसिद्धिः । तत्रोष्णस्पर्शभास्वररूपयोरुष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिः । तस्मात्सुवर्णं तैजसमिति सिद्धम् ॥

---

1 A B and X add प्रसिद्धं after आदित्यलोके.

2 A inserts घृतवत् after 'नाधिकरणत्वेन'.

[ १३ ]

रूपरहितस्पर्शवान्वायुः । स द्विविधो नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक्सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः ॥

शरीरान्तःसंचारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते ॥

त. दी.—वायुं लक्षयति—**रूपरहितेति**। आकाशादावतिव्याप्तिवारणाय **स्पर्शवानिति**। पृथिव्यादावतिव्याप्तिवारणाय **रूपरहितेति**। ननु प्राणस्य कुत्रान्तर्भाव इत्यत आह—**शरीरेति**। **स चेति**। एक एव प्राणः स्थानभेदात्प्राणापानादिशब्दैर्व्यवह्रियत इत्यर्थः। स्पर्शानुमेयो वायुः। तथाहि—योऽयं वायौ वाति सत्यनुष्णाशीतस्पर्शो भासते स स्पर्शः क्वचिदाश्रितो गुणत्वाद्रूपवत् । न चास्य पृथिव्याश्रय उद्भूतस्पर्शवतः पार्थिवस्योद्भूतरूपवत्त्वनियमात् । न जलतेजसी, अनुष्णाशीतस्पर्शवत्त्वात्। न विभुचतुष्टयं, सर्वत्रोपलब्धिप्रसङ्गात् । न मनः, परमाणुस्पर्शस्यातीन्द्रियत्वात् । तस्माद्यः प्रतीयमानस्पर्शाश्रयः स वायुः ॥ ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वाद्घटवदिति चेन्न । उद्भूतरूपवत्त्वस्योपाधित्वात् । यत्र द्रव्यत्वे सति बहिरिन्द्रियजन्यप्रत्यक्षत्वं तत्रोद्भूतरूपवत्त्वमिति घटादौ साध्यव्यापकत्वम् । यत्र प्रत्यक्षस्पर्शाश्रयत्वं तत्रोद्भूतरूपवत्त्वं नास्तीति पक्षे साधनाव्यापकत्वम्। न चैवं तप्तवारिस्थतेजसोऽप्यप्रत्यक्षत्वापत्तिः। इष्टत्वात् । तस्माद्रूपरहितत्वाद्वायुरप्रत्यक्षः ॥

इदानीं कार्यरूपपृथिव्यादिचतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते । ईश्वरस्य चिकीर्षावशात्परमाणुषु क्रिया जायते । ततः परमाणुद्वयसंयोगे सति द्व्यणुकमुत्पद्यते । त्रिभिर्द्व्यणुकैस्त्र्यणुकम् । एवं चतुरणुकादिक्रमेण महती पृथिवी महत्य आपो महत्तेजो महान्वायुरुत्पद्यते । एवमुत्पन्नस्य कार्यद्रव्यस्य संजिहीर्षावशात्परमाणुषु क्रिया। क्रियया

परमाणुद्वयविभागे सति द्व्यणुकनाशः । ततस्त्र्यणुकनाशः । ततश्चतुरणुकस्येत्येवं महापृथिव्यादिनाशः ॥ असमवायिकारणनाशाद्द्व्यणुकनाशः, समवायिकारणनाशात्त्र्यणुकनाश इति संप्रदायः । सर्वत्रासमवायिकारणनाशाद्द्रव्यनाश इति नवीनाः ॥

किं पुनः परमाणुसद्भावे प्रमाणम् । उच्यते । जालसूर्यमरीचिस्थं सूक्ष्मतमं यद्रज उपलभ्यते तत्सावयवम्, चाक्षुषद्रव्यत्वात्पटवत् । त्र्यणुकावयवोऽपि सावयवो महदारम्भकत्वात्तन्तुवत् । यो द्व्यणुकावयवः स परमाणुः । स च नित्यः । तस्यापि कार्यत्वेऽनवस्थाप्रसङ्गात् । सृष्टिप्रलयसद्भावे "धाता यथा पूर्वमकल्पयत्" इत्यादि श्रुतिः प्रमाणम् । सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः । सर्वभावकार्यध्वंसो महाप्रलय इति विवेकः॥

**न्या. बो.**—एवं पृथिव्यादि त्रिकं निरूप्य वायुं निरूपयति—**रूपरहितेति** । रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् । सतिसप्तम्या विशिष्टार्थकतया रूपरहितत्वविशिष्टस्पर्शवत्त्वं वायोर्लक्षणम् । विशेषणानुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिस्तद्वारणाय विशेषणोपादानम् । तावन्मात्रोपादानं आकाशादिपञ्चकेऽतिव्याप्तिस्तत्रापि रूपरहितत्वस्य सत्त्वात् । अत उक्तं **स्पर्शेति** । अतिव्याप्तिर्नामालक्ष्ये लक्षणसत्त्वम् । यथा गोः शृङ्गित्वं लक्षणं कृतं चेद्लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात् । अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् । लक्ष्यतावच्छेदकाश्रयीभूते क्वचिल्लक्ष्ये लक्षणस्यासत्त्वमेवाव्याप्तिरित्यर्थः । यथा गोर्नीलरूपवत्त्वं कृतं चेच्छ्वेतगवि नीलरूपाभावादव्याप्तिः । असंभवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वं यथा गोरेकशफत्वं गोसामान्यस्य द्विशफत्वेनैकशफवत्त्वस्य

---

1 A F N. Q and W add after this तथाच मेरुसर्षपयोरपि समानपरिमाणत्वापत्तिः. F reads पत्तेः, N has तुल्यत्वप्रसङ्गः for समानपरिमाणत्वापत्तिः, while Q. has तुल्यपरिमाणापत्तेः; but as all other copies omit the sentence it seems to be an interpolation.

2 A C, N, P Y Z put the first part of the sentence in the form of a पूर्वपक्ष as ननु सृष्टिप्रलयसद्भावे किं प्रमाणम्; A C K Z omit ननु; A K Y read मानम् for प्रमाणम्.

3 V and W omit this sentence.

कुत्राप्यसत्वात् । अतिव्याप्त्यव्याप्त्यसंभवानां निष्कृष्टलक्षणान्युच्यन्ते[1]। लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः । अव्याप्तिस्तु लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । असंभवस्तु लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् ॥

## [१४]

## शब्दगुणमाकाशम् । तच्चैकं विभु नित्यं च ॥

**त. दी.**—आकाशं लक्षयति **शब्दगुणमिति**। नन्वाकाशमपि किं पृथिव्यादिवन्नाना । नेत्याह—**तच्चैकमिति**। भेदे प्रमाणाभावादित्यर्थः। एकत्वादेव सर्वत्रोपलब्धेर्विभुत्वमङ्गीकर्तव्यमित्याह—**विभ्विति**। सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वं परिच्छिन्नपरिमाणवत्त्वं क्रियावत्त्वं वा । विभुत्वादेवात्मवन्नित्यमित्याह—**नित्यं चेति** ॥

**न्या. बो.**—आकाशं लक्षयति । **शब्दगुणकमिति** । अत्र गुणपदमाकाशे शब्द एव विशेषगुण इति द्योतनाय नत्वतिव्याप्तिवारणाय । समवायेन शब्दवत्वमात्रस्य सम्यक्त्वात् । तदुक्तं । रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः । बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ॥ **तच्चैकमिति** । अनेकत्वे मानाभावादितिभावः । **विभ्विति** । सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वं च क्रियाश्रयत्वम् । पृथिव्यप्तेजोवायुमनांसि मूर्तानि । पृथिव्यप्तेजोवाय्वाकाशपञ्चकं भूतपदवाच्यम् । भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ॥

## [१५]

## अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ॥

**त. दी.**—कालं लक्षयति—**अतीतेति** । सर्वाधारः कालः सर्वकार्यनिमित्तकारणं च ॥

---

1 V reads निर्दुष्टलक्षणमुच्यते for | निष्कृष्टलक्षणान्युच्यन्ते.

**न्या. बो.**—कालं लक्षयति—**अतीतेति**। व्यवहारहेतुत्वस्य लक्षणत्वे व्यवहारहेतुभूतघटादावतिव्याप्तिरस्तद्वारणाय अतीतेति विशेषणोपादानम् ॥

## [ १६ ]

प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका विभ्वी नित्या च ॥

**त. दी.**—दिशो लक्षणमाह—**प्राचीति**। दिगपि कार्यमात्रे निमित्तकारणम् ॥

**न्या. बो.**—दिशो लक्षणमाह—**प्राच्येति**। उदयाचलसंनिहिता दिक्प्राची । अस्ताचलसंनिहिता दिक्प्रतीची । मेरोः संनिहिता दिगुदीची। मेरोर्व्यवहिता दिगवाची ॥

## [ १७ ]

ज्ञानाधिकरणमात्मा । स द्विविधः परमात्मा जीवात्मा च। तत्रेश्वरः सर्वज्ञः परमात्मैक एव । जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च ॥

**त. दी.**—आत्मनो लक्षणमाह—**ज्ञानेति** ॥ आत्मानं विभजते—**स द्विविध** इति । परमात्मनो लक्षणमाह—**तत्रेति** । नित्यज्ञानाधिकरणत्वमीश्वरत्वम् ॥ नन्वीश्वरस्य सद्भावे किं प्रमाणम् । न तावत्प्रत्यक्षम् । तद्धि बाह्यमाभ्यन्तरं वा । नाद्यमरूपिद्रव्यत्वात् । नान्त्यमात्मसुखादिव्यतिरिक्तत्वात् । नाप्यनुमानं लिङ्गाभावादिति चेन्न । क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद्घटवदित्यनुमानस्य प्रमाणत्वात् ।

1 A B C F. Q. and X read नित्या विभ्वी च, but the reading adopted in the text is better as it agrees with the definitions of काल and आत्मा.

2 A B X जीवात्मा परमात्मा च; C, G जीवः for जीवात्मा.

3 A B add सुखदुःखादिरहितः after एव.

4 A F and Q. insert नाप्यागमस्तथाविधागमाभावात् after लिङ्गाभावात्, but the words appear to be interpolated and are inconsistent with the Vedic text cited further on. Z has नाप्युपमानं सादृश्याभावात् नापि शब्दः शब्दस्य वेदात्मकस्येश्वरोक्तत्वेन प्रामाण्यादीश्वरासिद्धौ तत्प्रामाण्यासिद्धेः

उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम् । उपादानं समवायिकारणम् । सकलपरमाण्वादिसूक्ष्मदर्शित्वात्सर्वज्ञत्वम् । " यः सर्वज्ञः स सर्ववित् " इत्याद्यागमोऽपि तत्र प्रमाणम् ॥

जीवस्य लक्षणमाह—**जीव** इति । सुखाद्याश्रयत्वं जीवलक्षणम् । ननु " मनुष्योऽहं ब्राह्मणोऽहम् " इत्यादौ सर्वत्राहंप्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेन्न । शरीरस्यात्मत्वे करपादादिनाशे सति शरीरनाशादात्मनोऽपि नाशप्रसङ्गात् । नापीन्द्रियाणामात्मत्वम् । तथात्वे " योऽहं घटमद्राक्षं सोऽहमिदानीं त्वचा स्पृशामि " इत्यनुसंधानाभावप्रसङ्गादन्यानुभूतेऽन्यस्यानुसंधानायोगात् । तस्माद्देहेन्द्रियव्यतिरिक्तो जीवः । सुखदुःखादिवैचित्र्यात्प्रतिशरीरं भिन्नः । स च न परमाणुः शरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गात् । न मध्यमपरिमाणः । तथा सत्यनित्यत्वप्रसङ्गेन कृतनाशाकृताभ्यागमप्रसङ्गात् । तस्मान्नित्यो विभुर्जीवः ॥

**न्या. बो.**—आत्मानं निरूपयति—**ज्ञानाधिकरणमि**ति । अधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम् ॥

## [ १८ ]

सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च ॥

**त. दी.**—मनसो लक्षणमाह—**सुखे**ति । स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम् । मनो विभजते—**तच्चे**ति । एकैकस्यात्मन एकैकं मन इत्यात्मनामनेकत्वान्मनसोऽप्यनेकत्वमित्यर्थः । **परमाणुरूपमि**ति । मध्यमपरिमाणत्वेऽनित्यत्वप्रसङ्गादित्यर्थः । ननु मनो नाणु किन्तु विभु, स्पर्शरहितद्रव्यत्वादाकाशवदिति चेन्न । मनसो विभुत्व आत्ममनःसंयोगस्यासमवायिकारणस्याभावाज्ज्ञानानुत्पत्तिप्रसङ्गात् । न च विभुद्वयसंयोगोऽस्त्विति वाच्यम् । तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात् । पुरितद्व्यतिरिक्तप्रदेश आत्ममनःसंयोगस्य सर्वदा

1 A B insert दुःख after सुख quite unnecessarily. | 2 E H read अणुरूपं.

**न्या. बो.**—कालं लक्षयति—**अतीतेति**। व्यवहारहेतुत्वस्य लक्षणत्वे व्यवहारहेतुभूतघटादावतिव्याप्तिस्तद्वारणाय अतीतेति विशेषणोपादानम् ॥

[ १६ ]

**प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका विभ्वी नित्या च ॥**[1]

**त. दी.**—दिशो लक्षणमाह—**प्राचीति** । दिगपि कार्यमात्रे निमित्तकारणम् ॥

**न्या. बो.**—दिशो लक्षणमाह—**प्राच्येति** । उदयाचलसंनिहिता दिक्प्राची । अस्ताचलसंनिहिता दिक्प्रतीची । मेरोः संनिहिता दिगुदीची। मेरोर्व्यवहिता दिगवाची ॥

[ १७ ]

**ज्ञानाधिकरणमात्मा । स द्विविधः परमात्मा जीवात्मा च ।[2] तत्रेश्वरः सर्वज्ञः परमात्मैक एव ।[3] जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च ॥**

**त. दी.**—आत्मनो लक्षणमाह—**ज्ञानेति** ॥ आत्मानं विभजते—**स द्विविध इति** । परमात्मनो लक्षणमाह—**तत्रेति** । नित्यज्ञानाधिकरणत्वमीश्वरत्वम् ॥ नन्वीश्वरस्य सद्भावे किं प्रमाणम् । न तावत्प्रत्यक्षम् । तद्धि बाह्यमाभ्यन्तरं वा । नाद्यमरूपिद्रव्यत्वात् । नान्त्यमात्मसुखादिव्यतिरिक्तत्वात् । नाप्यनुमानं लिङ्गाभावादिति चेन्न ।[4] क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद्घटवदित्यनुमानस्य प्रमाणत्वात् ।

1 A B C F, Q. and X read नित्या विभ्वी च, but the reading adopted in the text is better as it agrees with the definitions of काल and आत्मा.

2 A B X जीवात्मा परमात्मा च; C, O अपि: for जीवात्मा

3 A B add एतत् सर्वादिरहितः after एव

4 A F and Q. insert नाप्यागमः । तथाविधागमाभावात् after लिङ्गाभावात्, but the words appear to be interpolated and are inconsistent with the Vedic text cited further on. Z has नाप्युपमानं सादृश्याभावात् नापि शब्दः तस्य वेदात्मकस्येश्वरोक्तत्वेन प्रामाण्ये ईश्वरासिद्धौ तत्प्रामाण्यासिद्धेः

उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम् । उपादानं समवायिकारणम् । सकलपरमाण्वादिसूक्ष्मदर्शित्वात्सर्वज्ञत्वम् । " यः सर्वज्ञः स सर्ववित् " इत्याद्यागमोऽपि तत्र प्रमाणम् ॥

जीवस्य लक्षणमाह—**जीव** इति । सुखाद्याश्रयत्वं जीवलक्षणम् । ननु " मनुष्योऽहं ब्राह्मणोऽहम् " इत्यादौ सर्वत्राहंप्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेन्न । शरीरस्यात्मत्वे करपादादिनाशे सति शरीरनाशादात्मनोऽपि नाशप्रसङ्गात् । नापीन्द्रियाणामात्मत्वम् । तथात्वे " योऽहं घटमद्राक्षं सोऽहमिदानीं त्वचा स्पृशामि " इत्यनुसंधानाभावप्रसङ्गादन्यानुभूतेऽन्यस्यानुसंधानायोगात् । तस्माद्देहेन्द्रियव्यतिरिक्तो जीवः । सुखदुःखादिवैचित्र्यात्प्रतिशरीरं भिन्नः । स च न परमाणुः शरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गात् । न मध्यमपरिमाणः । तथा सत्यनित्यत्वप्रसङ्गेन कृतनाशाकृताभ्यागमप्रसङ्गात् । तस्मान्नित्यो विभुर्जीवः ॥

**न्या. बो.**—आत्मानं निरूपयति—**ज्ञानाधिकरणमिति** । अधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम् ॥

## [ १८ ]

सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च ॥

**त. दी.**—मनसो लक्षणमाह—**सुखेति** । स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम् । मनो विभजते—**तच्चेति** । एकैकस्यात्मन एकैकं मन इत्यात्मनामनेकत्वान्मनसोऽप्यनेकत्वमित्यर्थः । **परमाणुरूपमिति** । मध्यमपरिमाणत्वेऽनित्यत्वप्रसङ्गादित्यर्थः । ननु मनो नाणु किन्तु विभु, स्पर्शरहितद्रव्यत्वादाकाशवदिति चेन्न । मनसो विभुत्व आत्ममनःसंयोगस्यासमवायिकारणस्याभावाज्ज्ञानानुत्पत्तिप्रसङ्गात् । न च विभुद्वयसंयोगोऽस्त्विति वाच्यम् । तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात् । पुरितद्व्यतिरिक्तप्रदेश आत्ममनःसंयोगस्य सर्वदा

1 A B insert दुःख after सुख quite unnecessarily. | 2 E H read प्रत्यात्मं.

विद्यमानत्वात् । अणुत्वे तु यदा मनः पुरीतति नाड्यां प्रविशति तदा सुषुप्तिः । यदा निःसरति तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः ॥

न्या. बो.—मनो निरूपयति सुखादीति। उपलब्धिर्नाम साक्षात्कारः । तथा च सुखादिसाक्षात्कारकारणत्वे सतीन्द्रियत्वं मनसो लक्षणम् । इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिरतः पूर्वदलम् । विशेष्यानुपादान आत्मन्यतिव्याप्तिरात्मनो ज्ञानादिकं प्रति समवायिकारणत्वात् । अत इन्द्रियत्वोपादानम् ॥

[ १९ ]

चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधं पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ॥

त. दी.—रूपं लक्षयति—चक्षुरिति। संख्यादावतिव्याप्तिवारणाय मात्रपदम् । रूपत्वेऽतिव्याप्तिवारणाय गुणपदम् । प्रभाभित्तिसंयोगेऽतिव्याप्तिवारणाय चक्षुर्मात्रग्राह्यजातिमत्त्वं वाच्यम् । रूपं विभजते—तच्चेति ॥ नन्वव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपमिति चेन्न । रूपस्य व्याप्यवृत्तित्वनियमात् । ननु चित्रपटेऽवयवरूपस्य प्रतीतिरस्त्विति चेन्न । रूपरहितत्वेन पटस्याप्रत्यक्षत्वप्रसङ्गात् । न च रूपवत्समवेतत्वं प्रत्यक्षप्रयोजकं गौरवात् । तस्मात्पटस्य प्रत्यक्षत्वानुपपत्त्या चित्ररूपसिद्धिः ॥ रूपस्याश्रयमाह—पृथिव्यादीति । आश्रयं विभज्य दर्शयति—तत्रेति ॥

1 A, B, X read [illegible] and [illegible] respectively, J, K, have the same as A without the last [illegible]. E, G, H have [illegible] [illegible]. The reading adopted in the text is that of C, D and [illegible] and is preferred as making [illegible] [illegible] [illegible] and [illegible] [illegible] to [illegible] [illegible] [illegible] that of [illegible], while, taken separately, they can give proper sense only if construed as adverbs modifying [illegible].

2 N has [illegible] for चक्षुर्मात्रग्राह्यजातिमत्त्वं वाच्यम् C, Y, Z omit the sentence रूपं विभजते &c., while A omits the next sentence [illegible] &c. G, I, M, P and W omit both sentences.

**न्या. बो.**—रूपं लक्षयति—**चक्षुर्मात्रे**ति । चक्षुर्मात्रग्राह्यत्ववि-शिष्टगुणत्वं रूपस्य लक्षणम् । विशेष्यमात्रोपादाने रसादावतिव्याप्तिः । अतश्चक्षुर्मात्रग्राह्येति । तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः । यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदभावस्तदिन्द्रियग्राह्य इति नियमात् । तद्वारणाय विशेष्योपादानम् । चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रिया-ग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम् । मात्रपदानुपादाने संख्यादिसामान्यगुणेऽ-तिव्याप्तिः संख्यादावपि चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्त्वात् । अत-स्तद्वारणाय **मात्र**पदम् । संख्यादेश्चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मा-त्रग्राह्यत्वं नास्ति । अतीन्द्रिये गुरुत्वादावतिव्याप्तिवारणाय चक्षुर्ग्रा-ह्येति । अत्र लक्षणे ग्राह्यत्वं नाम लौकिकप्रत्यक्षविषयत्वम् । अग्राह्यत्वं नाम तदविषयत्वम् । तथा च चक्षुर्भिन्नेन्द्रियजन्यत्वाचसाक्षात्कारा-विषयत्वे सति चक्षुर्जन्यचाक्षुषप्रत्यक्षविषयत्वमिति फलितार्थः । ननु प्रभाभित्तिसंयोगे रूपलक्षणस्यातिव्याप्तिस्तस्य चक्षुर्मात्रग्राह्यगुणत्वादिति चेन्न । गुणपदस्य विशेषगुणपरत्वात् । न चैवं विशेषगुणघटितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति वाच्यम् । जलमात्रवृत्ति-सांसिद्धिकद्रवत्वेऽतिव्याप्तिवारणाय तदुपादानात् ॥ अथवा चक्षुर्मा-त्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्न प्रभाभित्तिसंयोगादावतिव्याप्तिः संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावाद्घटपटसंयोगस्य त्वगिन्द्रियग्राह्यत्वा-त्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात् । अत्र जातिघटितलक्षणे गुण-त्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिः । अतस्तद्वा-रणाय तदुपादानम् ॥ एवं रसादिलक्षणे विशेषणानुपादाने लक्ष्यभि-न्नगुणादावतिव्याप्तिः । विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादा-वतिव्याप्तिः । अतो विशेषणविशेष्ययोरुभयोरुपादानम् ॥

[ २० ]

रसनग्राह्यो गुणो रसः । स च मधुराम्ललवणकटुकषायतिक्त-भेदात्षड्विधः । पृथिवीजलवृत्तिः । पृथिव्यां षड्विधः । जले मधुर एव ॥

**त. दी.**—रसं लक्षयति—**रसने**ति । रसत्वेऽतिव्याप्तिपरिहाराय

गुणपदम् । रसस्याश्रयमाह—**पृथिवीति** ॥ आश्रयं विभज्य दर्शयति —**पृथिव्यामिति** ॥

[ २१ ]

**घ्राणग्राह्यो गुणो गन्धः । स च द्विविधः सुरभिरसुरभिश्च । पृथिवीमात्रवृत्तिः ॥**

**त. दी.**—गन्धं लक्षयति—**घ्राणेति** । गन्धत्वेऽतिव्याप्तिवारणाय गुणपदम् ॥

[ २२ ]

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स च त्रिविधः । शीतोष्णानुष्णशीतभेदात् पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः ॥**

**त. दी.**—स्पर्शं लक्षयति—**त्वगिति** । स्पर्शत्वेऽतिव्याप्तिवारणाय गुणपदम् । संयोगादावतिव्याप्तिवारणाय मात्रपदम् ॥

**न्या. बो.**—स्पर्शं लक्षयति—**त्वगिन्द्रियमात्रग्राह्य** इति । अत्रापि **मात्र**पदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय[1] । अन्यविशेषणकृत्यं पूर्ववद्बोध्यम् ॥ ग्राह्यत्वपदार्थोऽपि पूर्ववत्प्रत्यक्षविषयत्वरूप एव बोध्यः ॥

[ २३ ]

**रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च । अन्यत्रापाकजं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ॥**

**त. दी.**—**पाकजमिति** । पाकस्तेजःसंयोगः । तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यत इत्यर्थः । अत्र परमाणुष्वेव पाको न द्व्यणुकादौ । आमपाकनिक्षिप्ते[2] घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्द्व्यणु-

---

1 V reads संख्यादावतिव्याप्ति° which is perhaps preferable.

2 N Z and *Nil.* omit पाक. Other readings are आपाक and अपाक; but all are equally unsatisfactory. The one adopted in the text may mean a furnace if interpreted as a *Bahuvrīhi* compound आमस्य (घटस्य) पाको यस्मिन्.

कादिक्रमेण रक्तपटोत्पत्तिः। तत्र परमाणवः समवायिकारणम् । तेजः-संयोगोऽसमवायिकारणम् । अदृष्टादिकं निमित्तकारणम् । द्व्यणुकादिरूपे कारणरूपमसमवायिकारणम् इति पीलुपाकवादिनो वैशेषिकाः। पूर्वपटस्य नाशं विनैवावयविन्यवयवेषु परमाणुपर्यन्तेषु च युगपद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनो नैयायिकाः। अत एव पार्थिवपरमाणुषु रूपादिकमनित्य-मित्यर्थः॥ **अन्यत्रेति**। जलादावित्यर्थः। **नित्यगतमिति**। परमाणुगत-मित्यर्थः॥ **अनित्यगतमिति**। द्व्यणुकादिनिष्ठमित्यर्थः। रूपादिचतुष्टय-मुद्भूतं प्रत्यक्षमनुद्भूतमप्रत्यक्षम्। उद्भूतत्वं प्रत्यक्षप्रयोजको धर्मः। तद-भावोऽनुद्भूतत्वम् ॥

न्या. बो.—**रूपादिचतुष्टयं पृथिव्यां पाकजमिति**। एतत्तत्त्व-निर्णयश्चेत्थम्। पाको नाम विजातीयतेजःसंयोगः। स च नानाजा-तीयः। रूपजनको विजातीयः संयोगस्तदपेक्षया रसजनको विजा-तीयः। एवं स्पर्शादावपि। एवंप्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः। तथाहि तृणपुञ्जनिक्षिप्त आम्रादौ उष्मलक्षणविजातीयतेजःसंयोगात्पूर्वहरितरूपनाशे रूपान्तरस्य पीता-देरुत्पत्तिः पूर्वरसस्याम्लस्यैवानुभवात्। क्वचित्पूर्वहरितरूपसत्त्वेऽपि रसपरावृत्तिर्दृश्यते विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाम्लरसनाशे मधुररसस्यानुभवात्। तस्माद्रूपजनकापेक्षया रसजनको विलक्षणः। एवं गन्धजनको विलक्षण एवाङ्गीकार्यो रूपरसयोरपरावृत्तावपि पूर्व-गन्धनाशे विजातीयतेजःसंयोगेन सुरभिगन्धोपलब्धेः। एवं स्पर्श-जनकोऽपि पाकवशात्कठिनस्पर्शनाशे मृदुस्पर्शानुभवात्। तस्माद्रूपादि-जनका विजातीया एव पाका यथाकार्यमुन्नेयाः। अतएव पार्थिवपरमा-णूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः। यथा गोभुक्ततृणादिनामापरमाण्वन्तं भङ्गे तृणारम्भकपरमाणुषु विजातीयतेजः-संयोगवशात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते। तदुत्तरं तादृशरूपरसादय उत्पद्यन्ते। तादृशरूपादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुक-मारभ्यते। ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः॥ एवं महादुग्धारम्भकैः

परमाणुभिरेव द्व्यारभ्यते । एवं पाकमहिम्नैव द्व्यारम्भकैः परमाणुभिर्नवनीतारम्भ इति दिक् ॥

[ २४ ]

एकत्वादिव्यवहारहेतुः संख्या । नवद्रव्यवृत्तिरेकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं नित्यमनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्यमेव ॥

त. दी.—संख्यां लक्षयति—एकत्वेति ॥

[ २५ ]

मानव्यवहारकारणं परिमाणं । नवद्रव्यवृत्ति । तच्चतुर्विधम् अणु महद्दीर्घं ह्रस्वं चेति ॥

त. दी.—परिमाणं लक्षयति—मानेति । परिमाणं विभजते—तदिति । भावप्रधानो निर्देशः । अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वं चेत्यर्थः ॥

[ २६ ]

पृथग्व्यवहारकारणं पृथक्त्वं । सर्वद्रव्यवृत्ति ॥

त. दी.—पृथक्त्वं लक्षयति—पृथगिति । इदमस्मात्पृथगिति व्यवहारकारणमित्यर्थः ॥

[ २७ ]

संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ॥

त. दी.—संयोगं लक्षयति—संयुक्तेति । इमौ संयुक्ताविति व्यवहा-

1 A B C insert असाधारण between व्यवहार and हेतु here and in the following definitions of परिमाण, पृथक्त्व and संयोग, but the reading of the majority of copies is preferred. See Note *loc. cit.*

2 A B insert सा before नवद्रव्यवृत्तिः.

3 C E K X omit नित्यमनित्यं च.

रहेतुरित्यर्थः। संख्यादिलक्षणेषु सर्व त्र दिक्कालादावतिव्याप्तिवारणाया- साधारणेति पदं देयम् ॥ संयोगो द्वि विधः कर्मजः संयोगजश्च। आद्यो हस्तक्रियया हस्तपुस्तकसंयोगः। द्विती यो हस्तपुस्तकसंयोगात्कायपुस्तक- संयोगः। अव्याप्यवृत्तिः संयोगः। स्वा त्यन्ताभावसमानाधिकरणत्वमव्या- प्यवृत्तित्वम् ॥

[ २८ ]

संयोगनाशको गुणो विभ ागः। सर्वद्रव्यवृत्तिः ॥

त. दी.—विभागं लक्षयति—सं योगेति। कालादावतिव्याप्तिवार- णाय गुण इति। रूपादावतिव्याप्तिवा रणाय संयोगनाशक इति। वि- भागोऽपि द्विविधः कर्मजो विभागजश्च। आद्यो हस्तक्रियया हस्तपुस्तक- विभागः। द्वितीयो हस्तपुस्तकविभागात्क ायपुस्तकविभागः ॥

न्या. बो.—विभागं लक्षयति—सं योगेति। संयोगनाशकत्वविशि- ष्टगुणत्वं विभागस्य लक्षणम्। विशेषणम ात्रोपादाने क्रियाया अपि संयो- गनाशकत्वात्तत्रातिव्याप्तिवारणाय गुणत् वं विशेष्यम् ॥

[ २९ ]

परापरव्यवहारासाधारणकारणे प रत्वापरत्वे। पृथिव्यादिचतुष्ट- यमनोवृत्तिनी। ते द्विविधे दिक्कृते का लकृते च। दूरस्थे दिक्कृतं परत्वम्। समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम्। कनिष्ठे कालकृतमपरत्वम् ॥

त. दी.—परत्वापरत्वयोर्लक्षणमाह- परेति। परव्यवहारासाधारण- कारणं परत्वम्। अपरव्यवहारासाधारणक ारणमपरत्वमित्यर्थः। परापरत्वे विभजते—ते द्विविधे इति। दिक्कृतयोरु दाहरणमाह—दूरस्थ इति ॥ कालकृते उदाहरति— ज्येष्ठ इति ॥

---

H J omit असाधारण, but most of the copies agree in retaining it. | 2 E etc | G H J and X omit पृथिव्यादि

[ ३० ]

आद्यपतनासमवायिकारणं गुरुत्वं । पृथिवीजलवृत्ति ॥

त. दी.—गुरुत्वं लक्षयति—आद्येति । द्वितीयादिपतनस्य वेगासमवायिकारणत्वाद्वेगेऽतिव्याप्तिवारणायाद्येति ॥

न्या. बो.—गुरुत्वं लक्षयति—आद्येति । द्वितीयादिपतनक्रियायां वेगस्यैवासमवायिकारणत्वात्तत्रातिव्याप्तिवारणायाद्येति । उत्तरत्र स्यन्दन आद्यविशेषणमपि पूर्ववदेव योजनीयम् ॥

[ ३१ ]

आद्यस्यन्दनासमवायिकारणं द्रवत्वं । पृथिव्यप्तेजोवृत्ति । तद्द्विविधं सांसिद्धिकं नैमित्तिकं च । सांसिद्धिकं जले नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजन्यं[1] द्रवत्वम् । तेजसि सुवर्णादौ[2] ॥

त. दी.—द्रवत्वं लक्षयति—आद्यस्यन्दनेति । स्यंदनं स्रवणम् । तेजःसंयोगजन्यं नैमित्तिकद्रवत्वम् । तद्भिन्नं सांसिद्धिकद्रवत्वम् । पृथिव्यां नैमित्तिकद्रवत्वमुदाहरति— घृतादाविति । तेजसि तदाह— सुवर्णादाविति ॥

[ ३२ ]

चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ॥

त. दी.—स्नेहं लक्षयति—चूर्णेति । कालादावतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय चूर्णादीति[4] ॥

न्या. बो.—स्नेहं लक्षयति— चूर्णादीति । चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् । पिण्डीभावो नाम चूर्णादिधारणाकर्षणहेतुभूतो विलक्षणः संयोगः । तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वम् । न

---

1 C D E J read °संयोगजं.
2 B omits तेजसि सुवर्णादौ.
3 G J Y Z omit द्रव्य after नैमित्तिक.
4 A G J Y Z read पिण्डीभावेति. A has गुण for कर wrongly.

तु जलादिगतद्रवत्वस्य। तथा सति द्रुतसुवर्णादिसंयोगे चूर्णादेः पिण्डीभावापत्तेः। अतः स्नेह एवासाधारणकारणम्। विशेषणमात्रोपादाने कालादावतिव्याप्तिस्तद्वारणाय विशेष्योपादानम्। वस्तुतस्तु द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वम्। स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात्। जले द्रुतत्वविशेषणात्कारकादिव्यावृत्तिः॥

[ ३३ ]

**श्रोत्रग्राह्यो गुणः शब्दः। आकाशमात्रवृत्तिः। स द्विविधो ध्वन्यात्मको वर्णात्मकश्चेति। ध्वन्यात्मको भेर्यादौ। वर्णात्मकः संस्कृतभाषादिरूपः॥**

**त. दी.**—शब्दं लक्षयति—**श्रोत्रे**ति। शब्दत्वेऽतिव्याप्तिवारणाय **गुण** इति। रूपादावतिव्याप्तिवारणाय **श्रोत्रे**ति॥ शब्दस्त्रिविधः। संयोगजो विभागजः शब्दजश्चेति। तत्राद्यो भेरीदण्डसंयोगजन्यः। द्वितीयो वंशे उत्पाट्यमाने दलद्वयविभागजन्यश्चटचटाशब्दः। भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तं द्वितीयादिशब्दाः शब्दजाः॥

**न्या. बो.**—शब्दं लक्षयति—**श्रोत्रे**ति। शब्दत्वेऽतिव्याप्तिवारणाय गुणपदम्। रूपादावतिव्याप्तिवारणाय **श्रोत्रे**ति। स त्रिविधः। संयोगजो विभागजः शब्दजश्चेति। भेरीदण्डसंयोगजन्यो भाङ्कारादिशब्दः। हस्ताभिघातसंयोगजन्यो मृदङ्गादिशब्दः। वंशे पाट्यमाने दलद्वयविभागजश्चटचटादिशब्दः। शब्दोत्पत्तिदेशमारभ्य कर्णविवरपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनेन शब्दधारा जायन्ते। तत्रोत्तरशब्दे[1] पूर्वशब्दः कारणम्॥

[ ३४ ]

**सर्वव्यवहारहेतुर्बुद्धि[2]र्ज्ञानम्। सा द्विविधा स्मृतिरनुभवश्च।**

---

1 V has उत्तरोत्तरशब्दे पूर्वपूर्वशब्दः
2 O K add गुणः after हेतुः A E G X read °हेतुर्ज्ञानं बुद्धिः. See Note *loc. cit.*

संस्कारमात्रजन्यं ज्ञानं स्मृतिः। तद्भिन्नं ज्ञानमनुभवः।

त. दी.—बुद्धेर्लक्षणमाह—सर्वेति। जानामीत्यनुव्यवसायगम्यज्ञानत्वमेव लक्षणमित्यर्थः। बुद्धिं विभजते—सेति॥ स्मृतेर्लक्षणमाह—संस्कारेति। भावनाख्यः संस्कारः। संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति। घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय संस्कारजन्यमिति। प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रेति॥ अनुभवं लक्षयति—तद्भिन्नमिति। स्मृतिभिन्नं ज्ञानमनुभव इत्यर्थः॥

न्या. बो.—बुद्धेर्लक्षणमाह—सर्वेति। व्यवहारः शब्दप्रयोगः। ज्ञानं विना शब्दप्रयोगासंभवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं बुद्धेर्लक्षणम् बुद्धिं विभजते—सा द्विविधेति॥ स्मृतिं लक्षयति—संस्कारेति। बहिरिन्द्रियाजन्यत्वविशिष्टसंस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम्। विशेषणानुपादाने प्रत्यक्षाद्यनुभवेऽतिव्याप्तिः। तद्वारणाय विशेषणोपादानम् संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम्। ध्वंसं प्रति प्रतियोगिनः कारणत्वात्संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्वात्। प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम्॥ अनुभवं लक्षयति— तद्भिन्नमिति। तद्भिन्नत्वं नाम स्मृतिभिन्नत्वम्। स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम् तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः। विशेष्यानुपादाने घटादावतिव्याप्तिः। अतस्तद्वारणाय विशेषणविशेष्ययोरुभयोरुपादानम्॥

1 J omits मात्र, while the word and the commentary on it are added in G in a marginal note. Sc. also notices the omission of the word in several MSS., while the absence of the sentence referring to it in several copies of TD makes it probable that the word may not have existed originally. It is however retained in accordance with *Nil.* See Note on मात्र *loc. cit.*

2 N and Q add कालादावतिव्याप्तिवारणाय ज्ञानमिति। रूपादावतिव्याप्तिवारणाय सर्वव्यवहारेति while Q has गुण for ज्ञान; but the passage is not found anywhere else, nor noticed by *Nil.*

3 A O J L P Y Z omit this sentence, and G adds it in the margin; but it is retained on the authority of M N Q W and *Nil.*

4 All copies except V read ज्ञानस्य.

5 O K R omit बहिरिन्द्रियाजन्यत्वविशिष्ट.



स द्विविधो यथार्थोऽयथार्थश्च। तद्वति तत्प्रकारकोऽनुभवो यथार्थः यथा रजत इदं रजतमिति ज्ञानम्। स एव प्रमेत्युच्यते। तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः। यथा शुक्ताविदं रजतमिति ज्ञानम्॥

त. दी.—अनुभवं विभजते—**स द्विविध** इति। यथार्थानुभवस्य लक्षणमाह—**तद्वतीति**। ननु घटे घटत्वमिति प्रमायामव्याप्तिः घटत्वे घटाभावादिति चेन्न। यत्र यत्संबंधोऽस्तितत्र तत्संबंधानुभव इत्यर्थाद्घटत्वेऽपि घटसंबन्धोऽस्तीति नाव्याप्तिः। स इति। यथार्थानुभव एव शास्त्रे प्रमेत्युच्यत इत्यर्थः। अयथार्थं लक्षयति—**तदभाववतीति**। नन्विदं संयोगीति प्रमायामतिव्याप्तिरिति चेन्न। यदवच्छेदेन यत्संबंधाभाव-स्तदवच्छेदेन तत्संबंधज्ञानस्य विवक्षितत्वात् संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्, संयोगावच्छेदेन संयोगसंबन्धस्य सत्त्वात्, नातिव्याप्तिः॥

न्या बो.—अनुभवं विभजते—**स द्विविध** इति। यथार्थानुभवं लक्षयति—**तद्वतीति**। तद्वतीत्यत्र सप्तम्यर्थो विशेष्यकत्वम्। तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः। तथाच तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं यथार्थानुभवस्य लक्षणम्। उदाहरणं। रजत इदं रजतमिति ज्ञानम्। रजतत्व-

1 C H J K omit this sentence; E G Q X have instead यथार्थ घट इति; B adds यथा before रजत.

2 The reading in all copies of T. S. and T. D. except J is सैव, but स एव is adopted as being grammatically more correct.

3 Q. omits अनुभव while C E have तत्प्रकारकः.

4 C H J F and Q. omit this sentence. D adds further रजताभाववति शुक्तौ रजतत्वप्रकारक ज्ञानमयथार्थम्; but this as well as A's addition सैवाप्रमेत्युच्यते seem to be interpolations.

5 G reads यदभाव for यत्संबन्धाभाव.

6 A has संयोगज्ञानस्य प्रमात्वात् for संयोगसंबन्धस्य सत्त्वात्. J reads विद्यमानत्वात् for सत्त्वात्.

7 V adds ज्ञान before प्रकारीभूत., perhaps better.

8 S T and W read सामानाधिकरण्ये सत्यनुभवत्वं, perhaps better.

वद्विशेष्यकत्वे सति रजतत्वप्रकारकं ज्ञानम्। तद्वन्निष्ठविशेष्यतानिरूपिततान्निष्ठप्रकारिताशालित्वमिति निष्कर्षः। अन्यथा यथाभुते रङ्गरजतयोरिमे रजतरङ्गे इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिः। तत्रापि रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयोः, रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात्। उक्तनिष्कर्षे तु दर्शितभ्रमे नातिव्याप्तिः। रजतत्वप्रकारताया रजतत्ववद्रजतविशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया रङ्गत्ववद्रङ्गविशेष्यतानिरूपितत्वाभावाच्च। किंतु समूहालम्बने भ्रमस्य रङ्गांशे रजतत्वावगाहित्वेन रजतांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारतायाः रङ्गत्ववद्विशेष्यतानिरूपितत्वात्। एवं रजतांशे रङ्गत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाच्चेति[1]॥

अयथार्थानुभवं लक्षयति—**तदभाववतीति**। अत्रापि पूर्ववत्तदभाववद्विशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं विवक्षणीयम्। अन्यथा रङ्गरजतयोरिमे रङ्गरजते इत्याकारकसमूहालम्बनप्रमायामतिव्याप्तिरेतत्समूहालम्बनस्य रजतरङ्गोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयोः, रङ्गत्वाभाववद्रजतविशेषकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात्। उक्तनिष्कर्षे तु न तत्रातिव्याप्तिः। तादृशप्रमायाः रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वाभावादेवं रङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतनिष्ठविशेष्यतानिरूपितत्वाभावाच्च। उदाहरणं। यथा शुक्ताविति॥

## [ ३६ ]

**यथार्थानुभवश्चतुर्विधः प्रत्यक्षानुमित्युपमितिशाब्दभेदात्। तत्करणमपि चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात्॥**

**त. दी.**—यथार्थानुभवं विभजते—**यथार्थेति**। प्रसङ्गात्प्रमाकरणं विभजते—तत्करणमिति। प्रमाकरणमित्यर्थः। प्रमायाः करणं प्रमाणमिति प्रमाणसामान्यलक्षणम्॥

---

1 W. reads differently; U adds रजतत्वावच्छिन्नविशेष्यताशालिज्ञानं प्रमात्वम्.

2 The reading is taken from W

न्या. बो.—यथार्थानुभवं विभजते—यथार्थानुभव इति । तत्करणमिति । फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः । प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम् । एकैकप्रमाणलक्षणं तु वक्ष्यते प्रत्यक्षज्ञानेत्यादिना ॥

[ ३७ ]

असाधारणं कारणं करणम्[1] ।

त. दी.—करणलक्षणमाह—असाधारणेति । साधारणकारणे दिक्कालादावतिव्याप्तिवारणायासाधारणेति ॥

न्या. बो.—करणलक्षणमाह—असाधारणमिति । व्यापारवदसाधारणं कारणं करणमित्यर्थः । असाधारणकारणत्वं च कार्यत्वव्याप्य-[3] धर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । यथा दण्डादेर्घटादिकं प्रत्यसाधारणकारणत्वम् । कार्यत्वव्याप्यधर्मो घटत्वादिरूपधर्मः तदवच्छिन्नकार्यता घटे । तन्निरूपितकारणता दण्डे । अतो घटं प्रति दण्डोऽसाधारणकारणम् । भ्रम्यादिरूपव्यापारवत्वाच्च करणम्[2] । साधारणकारणत्वं कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । यथा ईश्वरादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारणकारणत्वम् ॥

[ ३८ ]

कार्यनियतपूर्ववृत्ति[4] कारणम् ।

---

1 All copies except B and K insert व्यापारवत् before असाधारण; in J the word is added in margin, apparently by another hand. But the प्रतीक in all copies of TD and the remarks of Sc. conclusively show that it did not exist originally. On this see Note *loc. cit.* G adds तज्जन्यत्वे सति तज्जन्यजनको व्यापारः, but the addition is unwarranted.

2 N here inserts चक्षुषा घटप्रत्यक्षे जननीये चक्षुःसंयोगरूपो व्यापारः । तत्रातिव्याप्तिवारणाय व्यापारवदित्यपि देयम्. Y adds घटं प्रति कपालद्वयसंयोगवारणाय व्यापारवदिति; but neither passage is found in any other copy.

3 U and W have अतिरिक्त for व्याप्य.

4 The reading in the text is taken from G K Q X, as being most probably the correct one. A B C D F prefix अनन्यथासिद्ध to कार्यनियत°. J adds the word in margin. E has अनन्यथासिद्धत्वे सति नियत°, while H reads कार्येऽन्यथासिद्धिशून्यत्वे सति नियत°. See Note *loc. cit.*

**त. दी.**—कारणलक्षणमाह—**कार्येति**। पूर्ववृत्ति कारणमित्युक्ते रासभादावतिव्याप्तिः स्यादतो **नियतेति**। तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः **पूर्ववृत्तीति** ॥ ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेन्न। अनन्यथासिद्धत्वे सतीति विशेषणात्। अनन्यथासिद्धत्वमन्यथासिद्धिविरहः। अन्यथासिद्धिश्च त्रिविधा। येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तेन तदन्यथासिद्धम्। यथा तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति। अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्। यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञात एव घटं प्रत्याकाशस्य। अन्यत्र क्लृप्तनियतपूर्ववर्तिनैव कार्यसंभवे तत्सहभूतमन्यथासिद्धम्। यथा पाकजस्थले गन्धं प्रति रूपप्रागभावस्य। एवं चानन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम् ॥

**न्या. बो.**—कारणं लक्षयति—**कार्यनियतेति**। कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वं कारणत्वम्। नियतत्वविशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यादतो **नियतेति** विशेषणम्। नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतोऽनन्यथासिद्धपदमपि कारणलक्षणे निवेशनीयं दण्डरूपादीनामन्यथासिद्धत्वात् ॥

### [ ३९ ]

कार्यं प्रागभावप्रतियोगि ॥

**त. दी.**—कार्यलक्षणमाह—**कार्यमिति** ॥

**न्या. बो.** कार्यं लक्षयति—**प्रागिति**। प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम्। उत्पत्तेः पूर्वमिह घटो भविष्यतीति प्रतीतिर्जायते। एतत्प्रतीतिविषयोऽभावः प्रागभावस्तत्प्रतियोगि घटादिरूपं कार्यम् ॥

### [ ४० ]

**कारणं त्रिविधं समवाय्यसमवायिनिमित्तभेदात्। यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्। यथा तन्तवः पटस्य पटश्च स्वगतरूपादेः। कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति**

यत्कारणं तदसमवायिकारणम्[1] । यथा तन्तुसंयोगः पटस्य तन्तुरूपं पटरूपस्य[2] । तदुभयाभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य ।

**त. दी.**—कारणं विभजते—**कारणमिति**। समवायिकारणस्य लक्षणमाह—**यत्समवेतमिति**। यस्मिन्समवेतमित्यर्थः। असमवायिकारणं लक्षयति—कार्येणेति। **कार्येणे**त्येतदुदाहरति—**तन्तुसंयोग** इति । कार्येण पटेनैकास्मिंस्तन्तौ समवेतत्वात्तन्तुसंयोगः पटस्यासमवायिकारणमित्यर्थः। **कारणेन** सहेत्येतदुदाहरति—**तन्तुरूपमिति**। कारणेन पटेन सहैकास्मिंस्तन्तौ समवेतत्वात्तन्तुरूपं पटरूपस्यासमवायिकारणमित्यर्थः। निमित्तकारणं लक्षयति—**तदुभयेति** । समवाय्यसमवायिभिन्नं कारणं निमित्तकारणमित्यर्थः[3] ॥

**न्या. बो.**—कारणं विभजते—**कारणमिति**। समवायिकारणं लक्षयति—**यत्समवेतमिति**॥ यस्मिन्समवेतं सत् समवायेन संबद्धं सत् कार्यमुत्पद्यते तत्समवायिकारणमित्यर्थः। उदाहरणं—**यथा तन्तव इति**। तन्तुषु समवायेन संबद्धं सत् पटात्मकं कार्यमुत्पद्यते इति तन्तवः समवायिकारणमित्यर्थः। सामान्यलक्षणं तु समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति । समवाय्यसंबन्धेन घटाधिकरणे कपालादौ कपालादेस्तादात्म्यसंबन्धेनैव सत्त्वात् । समवायसंबन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः[4] । समवायेन जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन द्रव्यस्यैव कारणत्वाज्जन्यभावेषु

---

1 E and Q supply यद् and तद् which though not absolutely necessary are inserted as making the sense clearer.

2 K reads पटगतरूपस्य.

3 N here adds इदं च कारणत्रयं भावकार्यस्यैव । अभावस्य तु निमित्तमात्रम्, but the words are not found in any other copy.

4 W inserts here कपालत्वावच्छिन्न.

द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम् । द्रव्ये द्रव्यावयवाः समवायिकारणम् । अतो गुणादावपि द्रव्यमेव समवायिकारणमित्याशयेनाह पटश्च स्वगतरूपादेरिति । समवायिकारणमित्यनुषज्यते । असमवायिकारणं लक्षयति—**कार्येणेति** । असमवायिकारणं द्विविधम् । कार्येण सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणमित्येकम् । कारणेन सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणमित्यपरमित्यर्थः । अत्र कारणेनेत्यस्य स्वकार्यसमवायिकारणेनेत्यर्थः । जन्यद्रव्यमात्रेऽवयवसंयोगस्यैवासमवायिकारणत्वात्पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वं दर्शयन्प्रथममुदाहरति—**यथा तन्तुसंयोगः पटस्येति** । पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवेतं सत् समवायसंबन्धेन वर्तमानं सत् पटात्मककार्यं प्रति तन्तुसंयोगात्मकं कारणमसमवायिकारणमित्यर्थः । द्वितीयसमवायिकारणं दर्शयति—**कारणेन सहेत्यादिना** । तदुदाहरति—**तन्तुरूपमिति** । कारणेन पटरूपसमवायिकारणीभूतपटेन सहैकस्मिन्नर्थे तन्तुरूपेऽर्थे समवेतं सत् समवायसंबन्धेन वर्तमानं सत् तन्तुरूपं पटगतरूपं प्रति कारणं भवति । अतोऽसमवायिकारणं तन्तुरूपं पटरूपस्य । सामान्यलक्षणं तु समवायसंबन्धावच्छिन्नकार्यतानिरूपिता या समवायस्वसमवायिसमवेतत्वान्यतरसंबन्धावच्छिन्ना कारणता तदाश्रयत्वम् । समवायसंबन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते । एवमाद्यपतनक्रियायामाद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः । आद्यपतनक्रियां प्रत्याद्यस्यन्दनक्रियां प्रति च तयोः समवायसंबन्धेनैव कारणत्वात् । अवयविगुणादौ त्ववयवगुणादेः स्वसमवायिसमवेतत्वसंबन्धेनैव कारणत्वात्तत्संबन्धावच्छिन्नकारणताश्रयत्वमवयवगुणादौ वर्तते । अवयवभूतकपालतन्तुरूपादेः स्वशब्दग्राह्यकपालरूपतन्तुरूपसमवायिक-

---

1 The following two sentences are omitted in O K R.

2 W reads differently.

3 Before समवाय° S T insert द्रव्यासमवायिकारणीभूतावयवसंबन्धे तु समवायसंबन्धावच्छिन्नपटत्वावच्छिन्नकार्यतानिरूपित°, but all other copies omit the words. S T also read संयोगत्वावच्छिन्ना for संयोगनिष्ठा. W reads differently.

पालतन्तुसमवेतत्वसंबन्धेन घटपटादौ सत्त्वात् ॥ निमित्तकारणं लक्षयति—तदुभयभिन्नमिति । समवाय्यसमवायिभिन्नमित्यर्थः ॥

[ ४१ ]

तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥

त. दी.—करणलक्षणमुपसंहरति—तदेतदिति ॥

न्या. बो.—करणलक्षणमुपसंहरति–तदेतदिति । यदसाधारणमित्यत्र व्यापारवत्त्वे सतीत्यपि पूरणीयम् । अन्यथा तन्तुकपालसंयोगयोरतिव्याप्तिः । तन्तुकपालसंयोगयोरपि कार्यत्वातिरिक्तपटत्वघटत्वावच्छिन्नं प्रति कारणत्वादसाधारणत्वमस्त्येव । अतस्तत्र करणत्ववारणाय व्यापारवत्त्वे सतीति करणलक्षणे विशेषणं देयम् । व्यापारत्वं तु तज्जन्यत्वे सति तज्जन्यजनकत्वम् । भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकता भ्रम्यादेर्दण्डव्यापारस्य । एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्त्वादिव्यापारत्वम् । कपालसंयोगस्य कपालजन्यत्वे सति कपालजन्यघटजनकत्वादेवं तन्तुसंयोगस्य तन्तुजन्यत्वे सति तन्तुजन्यपटजनकत्वात् । करणलक्षणेऽसाधारणविशेषणानुपादान ईश्वरादृष्टादेरपि व्यापारवत्त्वात्करणत्वं स्यात्तत्रातिव्याप्तिवारणायासाधारणेति ॥

[ ४२ ]

तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् । इन्द्रियार्थसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम् । तद्द्विविधं निर्विकल्पकं सविकल्पकं चेति । तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकं यथेदं किंचित्[2] । सप्रकारकं ज्ञानं सविकल्पकं यथा डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयमिति[3] ॥

---

1 S T W read the passage somewhat differently, though the sense is the same; thus अवयविगुणभूतघटपटरूपादौ स्वसमवायिगुणभूतकपालतंतुरूपादेः स्वपदग्राह्यकपालतंतुरूपादिसमवायिकपालतंत्वादिसमवेतत्वसंबन्धेनैव कारणत्वात्तत्संबन्धावच्छिन्नकारणताश्रयत्वमवयवगुणभूतकपालरूपतंतुरूपादौ वर्तत इति लक्षणसंगतिः.

2 E instead of this has किंचिदिदमिति वस्तुमात्रावगाहिज्ञानम्; G J Q and X omit the words altogether.

3 E adds पाचकोऽयम्, but the addition though desirable as giving an instance of क्रिया is not supported by any other copy.

**त. दी.**—प्रत्यक्षलक्षणमाह—**तत्रेति**। प्रमाणचतुष्टयमध्य इत्यर्थः। प्रत्यक्षज्ञानस्य लक्षणमाह—**इन्द्रियेति**। इन्द्रियं चक्षुरादिकम्। अर्थो घटादिः। तयोः संनिकर्षः संयोगादिः, तज्जन्यं ज्ञानमित्यर्थः॥ तद्विभजते—**तद्द्विविधमिति**। निर्विकल्पकस्य लक्षणमाह—**निष्प्रकारकमिति** विशेषणविशेष्यसंबन्धानवगाहि ज्ञानमित्यर्थः॥ ननु निर्विकल्पके किं प्रमाणमिति चेन्न। गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वाद्दण्डीति ज्ञानवदित्यनुमानस्य प्रमाणत्वात्। विशेषणज्ञानस्यापि सविकल्पकत्वेऽनवस्थाप्रसङ्गान्निर्विकल्पकसिद्धिः॥ सविकल्पकं लक्षयति—**सप्रकारकमिति**। नामजात्यादिविशेषणविशेष्यसंबन्धावगाहि ज्ञानमित्यर्थः। सविकल्पकमुदाहरति—**यथेति**॥

**न्या. बो.**—षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह—**तत्रेति**। प्रमाभूतेषु प्रत्यक्षात्मकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं तत्प्रति करणं व्यापारवदसाधारणकारणमिन्द्रियं भवति। अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम्[1]। आद्यसन्निकर्षातिरिक्तचतुर्विधसन्निकर्षाणां समवायघटितत्वेनेन्द्रियजन्यत्वाभावाद्व्यापारत्वं न संभवतीतीन्द्रियमनःसंयोगस्यैव षाड्विधप्रत्यक्षजननीय इन्द्रियव्यापारता बोध्या। मानसप्रत्यक्षे त्वात्ममनःसंयोगस्यैव सा बोध्या[2]॥ प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह। **इन्द्रियार्थसंनिकर्षेति**। आदौ लक्षणं जन्यप्रत्यक्षस्यैव लक्ष्यत्वाभिप्रायेण। ईश्वरप्रत्यक्षसाधारणं लक्षणं तु ज्ञानाकरणकम्। ज्ञानाकरणकमिति प्रत्यक्षप्रमालक्षणं। ज्ञानं व्याप्तिज्ञानं सादृश्यज्ञानं पदज्ञानं च, तदेव करणं येषां तानि ज्ञानकरणकानि अनुमित्युपमितिशाब्दानि, तद्भिन्नत्वमित्यर्थः। प्रत्यक्ष इन्द्रियाणामेव करणत्वान्न ज्ञानस्य करणत्वम्[3]। इदं लक्षणमीश्वरप्रत्यक्षसाधारणमीश्वरप्रत्यक्षस्याजन्यत्वात्। जन्यप्रत्यक्षस्यैव लक्ष्यत्वा-

1 A G J Y Z omit the sentence.

2 S U and W read षाड्ग for षड्वि.

3 C K R V omit this sentence, and perhaps it is spurious. U here adds विशेष्यमात्रांशो स्मृत्यनिष्पादितविशेषणमात्रांशो तद्वैशिष्ट्यादिविषयेषु प्रति न्यवतिपोग- म. कारणत्वादत उभयांशसाधारण. V is nearly to the same effect.

4 The reading of U and W is adopted as being more intelligible. Other copies transpose the sentences. U adds ईश्वरे लक्षणमिदं very appropriately. See Note *loc. cit.*

भिप्रायेणोत्तरमाह—इन्द्रियार्थसन्निकर्षेति। जन्यप्रत्यक्षस्यैव लक्ष्यत्वाभिप्रायेणेदं लक्षणम् ॥ प्रत्यक्षं विभजते—निर्विकल्पकमिति। तल्लक्षयति–निष्प्रकारकमिति। प्रकारताशून्यज्ञानत्वमेव निर्विकल्पकत्वमित्यर्थः। निर्विकल्पके चतुर्थी विषयता स्वीक्रियते। न तु त्रिविधविषयतामध्ये कापि तत्रास्ति। अतो विशेषणताशून्यत्वमिव विशेष्यताशून्यत्वं सन्निकर्षताशून्यत्वमित्यपि लक्षणं संभवति॥ सविकल्पकं लक्षयति—सप्रकारकमिति। विषयताया ज्ञाननिरूपितत्वात् ज्ञानस्य विषयतानिरूपकत्वेन प्रकारतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणम्। एवं विशेष्यतानिरूपकज्ञानत्वं सन्निकर्षतानिरूपकज्ञानत्वमित्यपि लक्षणं संभवति। उदाहरणं यथेति। इदंत्वावच्छिन्नविशेष्यतानिरूपितडित्थत्वप्रकारताशालिज्ञानं ब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः॥

[ ४३ ]

प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसंनिकर्षः षड्विधः। संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायो, विशेषणविशेष्यभावश्चेति[1]। चक्षुषा घटप्रत्यक्ष[2]जनने संयोगः संनिकर्षः। घटरूपप्रत्यक्षजनने[3] संयुक्तसमवायः संनिकर्षः, चक्षुःसंयुक्ते घटे रूपस्य समवायात्। रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः संनिकर्षः, चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात्। श्रोत्रेण शब्दसाक्षात्कारे समवायः संनिकर्षः, कर्णविवरवृत्त्याकाशस्य श्रोत्रत्वात्, शब्दस्याकाशगुणत्वात्, गुणगुणिनोश्च समवायात्। शब्दत्वसाक्षात्कारे समवेतसमवायः संनिकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्। अभावप्रत्यक्षे विशेषणविशेष्यभावः संनिकर्षो, घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य

---

1 A B join the words in a compound; J reads विशेषणता च for विशेषणविशेष्यभावश्च.

2 K inserts ज्ञान after प्रत्यक्ष unnecessarily.

3 K G read प्रत्यक्षे for प्रत्यक्षजनने, and omit संनिकर्षः in the following sentences.

विशेषणत्वात् । एवं संनिकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम् । तत्करणमिन्द्रियम् । तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ॥

त. दी.—इन्द्रियार्थसंनिकर्षं विभजते—प्रत्यक्षेति । संयोगसंनिकर्षमुदाहरति—चक्षुषेति । द्रव्यप्रत्यक्षे सर्वत्र संयोगः संनिकर्ष इत्यर्थः । आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते । संयुक्तसमवायमुदाहरति—घटरूपेति । तत्र युक्तिमाह—चक्षुःसंयुक्त इति । संयुक्तसमवेतसमवायमुदाहरति—रूपत्वेति । समवायमुदाहरति—श्रोत्रेणेति । तदुपपादयति—कर्णेति । ननु दूरस्थशब्दस्य कथं श्रोत्रसंबन्ध इति चेन्न वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण श्रोत्रदेशे जातस्य शब्दस्य श्रोत्रसंबन्धात्प्रत्यक्षत्वसंभवात् । समवेतसमवायमुदाहरति—शब्दत्वेति । विशेषणविशेष्यभावमुदाहरति—अभावेति । तदुपपादयति—घटाभाववदिति । भूतले घटो नास्तीत्यत्र घटाभावस्य विशेष्यत्वं द्रष्टव्यम् । एतेनानुपलब्धेः प्रमाणान्तरत्वं निरस्तम् । यद्यत्र घटोऽभविष्यत्तर्हि भूतलमिवाद्रक्ष्यत् । दर्शनाभावान्नास्तीति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धिसहकृतेन्द्रियेणैवाभावज्ञानोपपत्तौ अनुपलब्धेः प्रमाणान्तरत्वासंभवात् । अधिकरणज्ञानार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तावनुपलब्धेः करणत्वस्यायुक्तत्वात् । विशेषणविशेष्यभावो विशेषणविशेष्यस्वरूपमेव, नातिरिक्तः संबन्धः । प्रत्यक्षज्ञा-

---

1 K here adds भूतलस्य विशेष्यत्वात्. As to the correct reading of this passage, see Note *loc. cit.*

2 J has °षड्जं.

3 J omits इन्द्रियं and reads प्रत्यक्षं प्रमाणं for प्रत्यक्षप्रमाणं.

4 C G J L M N Y omit शब्दात्, and A C F L M P Q omit शब्दस्य, but are retained as helping to make the sense clear. For श्रोत्रदेशे P reads अन्यदेशे which gives a somewhat different though equally good meaning.

5 A F Q here add भूतलं विशेष्यं घटाभावो विशेषणं which is unwarranted and misleading.

6 N here inserts ननु विशेषणविशेष्यभावसंनिकर्षस्य लक्षणानाक्रान्तत्वात्कथं संबन्धत्वमिति चेन्न, but the passage appears to be interpolated.

नमुपसंहरंस्तस्य करणमाह—**एवमिति** । असाधारणकारणत्वादिन्द्रियं प्रत्यक्षज्ञानकरणमित्यर्थः । प्रत्यक्षमुपसंहरति—**तस्मादिति** ॥

**न्या. बो.**—चाक्षुषादिप्रत्यक्षकारणीभूतान् षड्विधसन्निकर्षान्विभजते—**संयोग** इत्यादिना । द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगस्य कारणत्वम् । द्रव्यसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य कारणत्वम् । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य कारणत्वम् । द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव । अन्यानि घ्राणरसनश्रवणानि तु गुणग्राहकाणि । अतस्त्वगिन्द्रियस्थले द्रव्यवृत्तिलौकिकविषयतासंबन्धेन त्वाचत्वावच्छिन्नं प्रति त्वक्संयोगस्य कारणत्वम् । एवं द्रव्यसमवेतत्वाचत्वावच्छिन्नं प्रति त्वक्संयुक्तसमवायस्य कारणत्वम् । द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य कारणत्वम् । एवमात्मरूपद्रव्यमानसप्रत्यक्षे मनःसंयोगस्य कारणत्वम् । आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवायस्य कारणत्वम् । आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य कारणत्वम् । रसनघ्राणयोस्तु रसगन्धतद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः सन्निकर्षयोरेव रसगन्धादिप्रत्यक्षे हेतुता वाच्या । श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण च समं शब्दस्य समवायः सन्निकर्षः । शब्दसमवेतशब्दत्वादिजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता ॥ अभावप्रत्यक्षे विशेषणविशेष्यभावो नाम विशेषणतासन्निकर्षः ॥ [1]षट्सन्निकर्षेषु मध्ये संयोगस्थाने संयुक्तपदं घटयित्वा समवायस्थाने समवेतपदं घटयित्वा अभावस्थले निर्वाह्यम् । तथाहि द्रव्याधिकरणका-

1 N adds प्रत्यक्षप्रमाकरणत्वादि-त्यर्थः.
2 S T V omit this sentence.
3 The whole passage from षड्- to इति संक्षेपः seems to be corrupt. The reading of W is adopted as being the most intelligible.

भावप्रत्यक्षे संयुक्तविशेषणता । द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे संयुक्तसमवेतविशेषणता च । द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे संयुक्तसमवेतसमवेतविशेषणता च संनिकर्षः । तत्र घटे घटत्वाभावः संयुक्तविशेषणतया गृह्यते । घटसमवेतघटत्वादौ पृथिवीत्वाभावः संयुक्तसमवेतविशेषणतया गृह्यते । घटसमवेतसमवेतरूपत्वादौ नीलत्वाभावश्च संयुक्तसमवेतसमवेतविशेषणतया गृह्यत इति संक्षेपः ॥ इति प्रत्यक्षपरिच्छेदः समाप्तः ॥

## [ ४४ ]

अनुमितिकरणमनुमानम् । परामर्शजन्यं ज्ञानमनुमितिः । व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा वह्निव्याप्य धूमवानयं पर्वत इति ज्ञानं परामर्शः[1] । तज्जन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिः । यत्र यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः । व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ॥

त. दी.—अनुमानं लक्षयति—**अनुमितिकरणमिति** । अनुमितेर्लक्षणमाह—**परामर्शेति** । ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः, स्थाणुपुरुषसंशयानन्तरं, पुरुषत्वव्याप्यकरादिमानयमिति परामर्शे सति, पुरुष एवेति प्रत्यक्षजननात् । न च तत्रानुमितिरेवेति वाच्यम् । "पुरुषं साक्षात्करोमि" इत्यनुव्यवसायविरोधादिति चेन्न । पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात् । सिषाधयिषाविरहसहकृतसिद्ध्यभावः पक्षता । साध्यसिद्धिरनुमितिप्रतिबन्धिका । सिद्धिसत्वेऽप्यनुमिनुयामितीच्छायामनुमितिदर्शनात् सिषाधयिषोत्तेजिका । ततश्चोत्तेजकाभावविशिष्टमण्यभावस्य दाहकारणत्ववत् सिषाधयिषाविरहसहकृतसिद्ध्यभावस्याप्यनुमितिकारणत्वम् ॥ परामर्शं लक्षयति—**व्याप्तीति** । व्याप्तिविशयकं पक्षधर्मताज्ञानं

---

1 E and X omit ज्ञानं परामर्शः and perhaps for the better; G omits अयम्.

स परामर्श इत्यर्थः। परामर्शमभिनीय दर्शयति—यथेति। अनुमितिमभिनयति—तज्जन्यमिति। परामर्शजन्यमित्यर्थः॥ व्याप्तेर्लक्षणमाह—यत्रेति। यत्र धूमस्तत्राग्निरिति व्याप्तेरभिनयः। साहचर्यनियम इति लक्षणम्। साहचर्यं सामानाधिकरण्यं, तस्य नियमः। हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः। पक्षधर्मतास्वरूपमाह—व्याप्यस्येति॥

**न्या. बो.**—अनुमानं लक्षयति—**अनुमितिकरणमिति**। अनुमितौ व्याप्तिज्ञानं करणं, परामर्शो व्यापारोऽनुमितिः फलं कार्यमित्यर्थः। परामर्शस्य व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकत्वाच्च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारलक्षणमुपपन्नम्। अनुमितिकरणत्वमनुमानस्य लक्षणम्। अनुमानं च व्याप्तिज्ञानम्। एतस्य परामर्शरूपव्यापारद्वाराऽनुमितिं प्रत्यसाधारणकारणतयाऽनुमितिकरणत्वमुपपन्नम्। **परामर्शजन्यमिति**। परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम्। तत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिरतस्तद्वारणाय परामर्शजन्यत्वे सतीति विशेषणोपादानम्। विशेषणमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरतस्तद्वारणाय ज्ञानत्वोपादानम्। अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे—**व्याप्तिविशिष्टेति**। व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानं चेति कर्मधारयः। अत्र विशिष्टपदस्य प्रकारतापरत्वात् पक्षधर्मताया ज्ञानमित्यत्र षष्ठ्या विषयत्वबोधनात् पक्षधर्मतापदस्य पक्षसंबन्धार्थकत्वात्कर्मधारयसमासे समस्यमानपदार्थयोरभेदसंसर्गलाभेन च व्याप्तिप्रकारकाभिन्नं यत्पक्षसंबन्धविषयकं ज्ञानं तत्परामर्श इति लभ्यते।

---

1 N here adds व्याप्यो नाम व्याप्त्याश्रयः स च धूमादिरेव तस्य पर्वतादिनिरूपितवृत्तित्वं पक्षधर्मतेत्यर्थः; but the wording of the sentence as well as its absence in any other copy prove its spuriousness.

5 O K R Y omit the sentence अनुमिति—माचष्टे; and give the full definition of परामर्श instead of the following प्रतीक.

एवं सति धूमो वह्निव्याप्य आलोकवान्पर्वत इति समूहालंबनेऽप्युक्तपरामर्शलक्षणमस्तीत्यतिव्याप्तिः, तद्वारणाय पक्षानिष्ठविशेष्यतानिरूपितहेतुनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारताशालिज्ञानं परामर्श इति निष्कर्षः । एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम् । अनुमितिपरामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम् । वह्नित्वावच्छिन्नसंयोगसंबन्धावच्छिन्नविधेयतानिरूपित– पर्वतत्वावच्छिन्नोद्देश्यताशाल्यनुमितित्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नप्रकारतानिरूपित–व्याप्तित्वावच्छिन्नप्रकारतानिरूपित-धूमत्वावच्छिन्नप्रकारतानिरूपित-पर्वतत्वावच्छिन्नविशेष्यतानिरूपित– विशेष्यिताशालिनिर्णयः कारणम् । वह्नित्वावच्छिन्नप्रकारतानिरूपित-व्याप्तित्वावच्छिन्नविशेष्यताया धूमत्वावच्छिन्नविशेष्यतानिरूपित–व्याप्तित्वावच्छिन्नप्रकारतायाश्च अभेदानङ्गीकर्तृमते वह्नित्वावच्छिन्नप्रकारतानिरूपित– विशेष्यत्वावच्छिन्नव्याप्तित्वावच्छिन्नप्रकारतानिरूपित– विशेष्यत्वावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपित–पर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यिताशालिनिर्णयः कारणमिति वाच्यम्। स च निर्णयो वह्निव्याप्यधूमवान् पर्वत इत्याकारको बोध्यः ॥

**यत्रेति** । यत्रपदवीप्सावशात् धूमाधिकरणे यावति वह्निमत्त्वलाभात् यावत्पदमहिम्ना वह्नेर्धूमव्यापकत्वं लब्धम् । तदेव स्पष्टयति—साहचर्यनियम इति । नियतसाहचर्यं व्याप्तिरित्यर्थः । नियतत्वं व्यापकत्वं । [2]साहचर्यं सामानाधिकरण्यम् । तथा च धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः। वह्नेर्धूमव्यापकत्वं च धूमसमानाधिकरणात्यंताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । तथाहि धूमाधिकरणे चत्वरमहानसादौ वर्तमानोऽभावो घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावः, न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावः । कुतः । चत्वरमहानसादौ वह्नेः सत्त्वात् । एवं सति धूमाधिकरणे पर्वतचत्वरादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकं

---

1 The passage, which follows, seems to have been much tampered with. C K R V generally agree among themselves, though they materially differ from the above.

2 The passage is taken from S and W, but is not found in other copies.

घटत्वादिकमनवच्छेदकं वह्नित्वं वह्नौ वर्ततेऽतो धूमव्यापकत्वं वह्नौ वर्तते। इयमन्वयव्याप्तिः सिद्धान्तानुसारेण। पूर्वपक्षव्याप्तिस्तु प्रतियोगिव्यधिकरण–साध्याभाववदवृत्तित्वम्। साध्यतावच्छेदकसंबन्धावच्छिन्न– साध्यतावच्छेदकावच्छिन्नप्रतियोगिताक– प्रतियोगितावच्छेदकसंबन्धावच्छिन्न–प्रतियोगितावच्छेदकावच्छिन्नविष्यधिकरण्यावच्छिन्नाभावनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्न–वृत्तित्वावच्छिन्न–प्रतियोगिताकाभावो व्याप्तिरित्यर्थः। तच्च केवलान्वयिन्यव्याप्तमिति सिद्धान्तानुसरणम्॥

[ ४५ ]

अनुमानं द्विविधं स्वार्थं परार्थं च। तत्र स्वार्थं स्वानुमितिहेतुः। तथा हि स्वयमेव भूयो दर्शनेन यत्र धूमस्तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन्व्याप्तिं स्मरति यत्र धूमस्तत्राग्निरिति। तदनन्तरं वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते। अयमेव लिङ्गपरामर्श इत्युच्यते। तस्मात्पर्वतो वह्निमानिति ज्ञानमनुमितिरुत्पद्यते। तदेतत्स्वार्थानुमानम्।

यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम्। यथा पर्वतो वह्निमान्धूमवत्त्वात्। यो यो धूमवान्स वह्निमान् यथा महानसः। तथा चायम्। तस्मात्तथेति। अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते॥

---

1 S W here adds तथाच धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरिति फलितम्.

2 D adds परार्थं परप्रतिपत्तिहेतुः.

3 A B C D F H have गत्वा for गतः probably substituted to avoid repetition of गतः For तद्गते H has तत्र आर्द्रेन्धने, a further emendation not warranted by the context.

4 C reads अनुमितिरूपम् for अनुमिति·; X omits it.

5 A B C D read परं प्रति बोधयितुं which makes the construction awkward; J reads प्रतीति for प्रतिपत्ति, and C प्रयुज्यते for प्रयुङ्क्ते; G has पञ्चावयवोपेतं for पञ्चावयव°.

त. दी.—अनुमानं विभजते—**अनुमानमिति** । स्वार्थानुमितिहेतुमाह—**स्वयमेवेति** । **भूयोदर्शनेनेति** । धूमाग्न्योर्व्याप्तिग्रहे साध्यसाधनयोर्भूयः सहचारदर्शनेनेत्यर्थः । ननु पार्थिवत्वलोहलेख्यत्वादौ शतशः सहचारदर्शनेऽपि वज्रादौ व्यभिचारोपलब्धेर्भूयोदर्शनेन कथं व्याप्तिग्रह इति चेन्न व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात् । व्यभिचारज्ञानं द्विविधम्, निश्चयः शङ्का च । तद्विरहः क्वचित्तर्कात्क्वचित्स्वतःसिद्ध एव । धूमाग्निव्याप्तिग्रहे कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्को व्यभिचारशङ्कानिवर्तकः ॥ ननु सकलवह्निधूमयोरसंनिकर्षात्कथं व्याप्तिग्रह इति चेन्न। धूमत्ववह्नित्वरूपसामान्यलक्षणप्रत्यासत्त्या सकलधूमवह्निज्ञानसंभवात् ॥ **तस्मादिति** । लिङ्गपरामर्शादित्यर्थः। परार्थानुमानमाह—**यत्त्विति** ॥ यच्छब्दस्य तत्परार्थानुमानमिति तच्छब्देनान्वयः ॥ पञ्चावयववाक्यमुदाहरति—**यथेति** ॥

न्या. बो.—अनुमानं विभजते—**स्वार्थमिति** । स्वार्थानुमानं नाम न्यायप्रयोज्यानुमानम् । तत्प्रयोज्यानुमानं परार्थानुमानम्॥ न्यायत्वं च प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम् । अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वम् ॥

## [ ४६ ]

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । पर्वतो वह्निमानिति प्रतिज्ञा । धूमवत्त्वादिति हेतुः । यो यो धूमवान्स सोऽग्निमान्यथा महानस इत्युदाहरणम् । तथा चायमित्युपनयः । तस्मात्तथेति निगमनम् ॥

---

1 J Y omit this sentence. A adds स्वार्थानुमानं विविच्य दर्शयति—तथाहीति which is superfluous. F and Q here add तद्द्वैविध्यं दर्शयति—स्वार्थमिति । तत्रेति । उभयोर्मध्य इत्यर्थः ।

2 The passage is taken from N. A omits the whole of it, while other copies retain भूयोदर्शनेनेति, omitting the latter part, which, however, appears to be necessary to complete the explanation.

3 M N omit वज्रादौ व्यभिचारोपलब्धेः, while J Y Z omit वज्रादौ only; L reads वज्रमणौ, F हीरके, and Q मण्यादौ.

4 The reading is that of D H K; J gives the same minus one सः and with महानसे. C E omit यथा महानसः, while A B F retain only the first three words.

त. दी.—अवयवस्वरूपमाह—प्रतिज्ञेति । उदाहृतवाक्ये प्रतिज्ञादिविभागमाह[1]—पर्वतो वह्निमानिति। साध्यवत्तया पक्षवचनं प्रतिज्ञा। पञ्चम्यन्तं[2] लिङ्गप्रतिपादकं वचनं हेतुः । व्याप्तिप्रतिपादकमुदाहरणम् । पक्षधर्मताज्ञानार्थमुपनयः । अबाधितत्वादिकं निगमनप्रयोजनम् ॥

[ ४७ ]

स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्[3] । तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥

त. दी.—अनुमितिकरणमाह—स्वार्थेति ॥ ननु व्याप्तिस्मृतिपक्ष-

---

1 A G L P Y Z have विशेष for विभाग.

2 The passage from पञ्चम्यन्तं to the end appears to have been tampered with. All copies except G N and Z agree in reading it as above. N and Z give a materially different version:—पञ्चम्यन्तं तृतीयान्तं वा लिङ्गप्रतिपादकं वचनं हेतुः। व्याप्तिप्रतिपादकं दृष्टान्तवचनमुदाहरणम्। व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनमुपनयः । हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम्। पक्षज्ञानं प्रतिज्ञाप्रयोजनम् । लिङ्गज्ञानं हेतुप्रयोजनम् । व्याप्तिज्ञानमुदाहरणप्रयोजनम्। पक्षधर्मताज्ञानमुपनयप्रयोजनम्। अबाधितत्वादिकं निगमनप्रयोजनम्। G and Q agree with this from व्याप्तिविशिष्ट° to the end. The repetitious and fuller explanation in this passage show that it is an interpolation. *Nil.* does not seem to be aware of it, especially its latter half beginning with पक्षज्ञानं प्रतिज्ञाप्रयोजनम्. Having explained the definitions as read by N, *Nil.* notices the reading adopted in our text as a *v. l.* and remarks पक्षधर्मताज्ञानार्थमुपनय इति पाठे तु 'प्रयुज्यते' इति शेषपूरणेन प्रदर्शितार्थ एव यथाकथंचित् संगमनीयः । This shows that even *Nil.* found the text corrupt, and was not satisfied with the reading usually met with. It is possible that some later writer corrected the loose definitions of उपनय and निगमन given by *Annambhaṭṭa* and the latter being retained three more प्रयोजनघटित sentences were added to complete the list.

3 Curiously enough all copies except G K X read कारणं which is clearly a mistake. In J the vertical bar appears to have been erased afterwards.

धर्मताज्ञानाभ्यामेवानुमितिसंभवे व्याप्तिविशिष्टलिङ्गपरामर्शः किमर्थमङ्गीकर्तव्य इति चेन्न।वह्निव्याप्यधूमवानयमिति शाब्दपरामर्शस्थले विशिष्टपरामर्शस्यावश्यकतया लाघवेन सर्वत्र परामर्शस्यैव करणत्वात्। लिङ्गं न करणम् ।अतीतादौ व्यभिचारात्। व्यापारवत्कारणं करणमिति मते परामर्शद्वारा व्याप्तिज्ञानं करणम् । तज्जन्यत्वे सति तज्जन्यजनको व्यापारः॥ अनुमानमुपसंहरति—तस्मादिति ॥

[ ४८ ]

लिङ्गं त्रिविधम् । अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति । अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि । यथा वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निर्यथा महानस इत्यन्वयव्याप्तिः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः । अन्वयमात्रव्याप्तिकं केवलान्वयि यथा घटोऽभिधेयः प्रमेयत्वात्पटवत् । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च।व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् । यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलम्, न चेयं तथा, तस्मान्न तथेति । यद्गन्धवत्तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ॥

त. दी.—लिङ्गं विभजते—लिङ्गमिति ॥ अन्वयव्यतिरेकि लक्षयति—अन्वयेनेति । हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः।तदभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः ॥ केवलान्वयिनो लक्षणमाह—अन्वयेति।केवलान्व-

1 A F and Q omit the words व्याप्तिलिङ्ग and विशिष्ट॰ before ॰परामर्श॰

2 After व्याप्तिज्ञानं A and F add पक्षज्ञानं साध्यज्ञानं लिङ्गज्ञानं यत्किंचिज्जन्यज्ञानमात्रं वा परामर्शव्यापारकम्॰

3 For व्याप्तिमद् O reads यत्र॰ व्याप्तिस्तद॰

4 O here adds यत्सत्त्वे तत्सत्त्वमन्वयः। यदभावे तदभावो व्यतिरेकः, but the words are found nowhere else.

5 O G H read ॰रेभ्यः; F has इतर॰ भेदवद॰

यिसाध्यकं केवलान्वयि। अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्। केवलान्वयिनमुदाहरति यथा घटोऽभिधेयः प्रमेयत्वादिति। ईश्वरप्रमाविषयत्वं सर्वपदाभिधेयत्वं च सर्वत्रास्तीति व्यतिरेकाभावः॥ केवलव्यतिरेकिणो लक्षणमाह—**व्यतिरेके**ति। केवलव्यतिरेकिणमुदाहरति—**पृथिवी**ति। नन्वितरभेदः प्रसिद्धो वा न वा। आद्ये यत्र प्रसिद्धस्तत्र हेतुसत्त्वेऽन्वयित्वम् असत्त्वेऽसाधारण्यम्। द्वितीये साध्यज्ञानाभावात्कथं तद्विशिष्टानुमितिः। विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात्। प्रतियोगिज्ञानाभावाद्व्यतिरेकव्याप्तिज्ञानमपि न स्यादिति चेन्न। जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यते। तत्र त्रयोदशत्वावच्छिन्नभेदस्यैकाधिकरणवृत्तित्वाभावान्नान्वयित्वासाधारण्ये। प्रत्येकाधिकरणे प्रसिद्ध्या साध्यविशिष्टानुमितिर्व्यतिरेकव्याप्तिनिरूपणं चेति[3]॥

**न्या. बो.**—**अन्वये**नेति। साध्यसामानाधिकरण्यरूपान्वयव्याप्तिमानित्यर्थः। **व्यतिरेके**णेति। व्यतिरेको नामाभावः। तथा च साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः। इयं च व्याप्तिः **यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव** इति। यत्रपदवीप्सया वह्न्यभाववति यावति धूमाभावग्रहणे यावत्पदस्य व्यापकत्वपरतया धूमाभावे वह्न्य-

1 A J Y Z omit thi· sentence. G replaces this and the next sen tence by a single one व्यतिरेकि दर्शयति—व्यतिरेकमात्रेति.

2 M inserts प्रभावज्ञानाभावेन after प्रतियोगिज्ञानाभावात्

3 The concluding passage of TD beginning with तत्र is undoubtedly corrupt, and is absolutely unintelligible as it is read in most of the printed editions and Mss. Only N and J seem to give an approximately correct and intelligible r ading. I have substituted भेद for साध्य and changed प्रत्येकाधिकरण° into °करणे, on the single authority of N, because the emendations make the meaning clearer. J F and Q alone make नान्वयित्वासाधारण्ये part of the previous sentence as it certainly ought to be. F and Q insert साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति before व्यतिरेक" See Note *loc. cit.*

भावव्यापकत्वं लभ्यम् । एवं च वह्न्यभावनिष्ठा व्याप्तिः स्वाश्रयीभूतव-ह्न्यभावव्यापकीभूताभावप्रतियोगित्वसंबन्धेन धूमनिष्ठतया गृह्यत इति व्यतिरेकव्याप्तिमत्त्वेन व्यतिरेकित्वेन धूमव्यापकवह्निसामानाधिकरण्य-रूपान्वयव्याप्तिमत्त्वेनान्वयित्वेन च गीयते[1] । व्यतिरेकपरामर्शस्तु वह्न्य-भावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वत इत्याकारकः ॥

केवलान्वयिनो लक्षणमाह—अन्वयेति । व्यतिरेकव्याप्तिशून्यत्वे सत्यन्वयव्याप्तिमत्त्वं केवलान्वयित्वम् । साध्ये केवलान्वयित्वमभावाप्रति-योगित्वम् । तथा चाभावाप्रतियोगिसाध्यकत्वं केवलान्वयिहेतोर्लक्षणम्[2] । एतल्लक्षणं हेतोर्व्यतिरेकित्वेऽपि संगच्छते । साध्यस्य केवलान्वयित्वाद्व्य-तिरेकव्याप्तेरभावादन्वयमात्रव्याप्तिकं केवलान्वयीति मूलोक्तलक्षणमुप-पन्नम् । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । न चैवमाकाशा-भावे संयोगाभावे चाव्याप्तिरिति वाच्यम् । स्वविरोधिवृत्तिमदत्यन्ता-भावाप्रतियोगित्वस्यैव तदर्थत्वात् । एकजातीयसंबन्धेन सर्वत्र विद्यमा-नत्वं केवलान्वयित्वमिति नव्याः ॥ केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति ॥ अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवल-व्यतिरेकित्वम् । यथेति । अत्र पृथिवीत्वावच्छिन्नं पक्षः । पृथिवीतर-जलादिभेदः साध्यः । गन्धवत्त्वं हेतुः । अत्र यद्गन्धवत्तदितरभेदवदित्य-न्वयदृष्टान्ताभावात्, गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्ति-ग्रहासंभवात्, नास्त्यन्वयव्याप्तिः ॥ किंतु यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावो यथा जलादिकमिति । व्यतिरेकदृष्टान्तभूतजलादावितरभे-दाभावरूपसाध्याभावव्यापकता गन्धाभावे दृश्यते। इममेवार्थं मनसि निधाय **यदितरेभ्यो न भिद्यते न तद्गन्धवद्यथा जलमिति** ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान्। एवं व्यतिरेकव्याप्तिग्रहानन्तरम्, इतरभेदा-भावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवी इत्याकारकव्यतिरेकपराम-

---

1 S and W read the passage a little differently.

[illegible] of this sentence S and [illegible] अथवा केवलान्वयिसा-ध्यकत्वं तद् ।

3 W reads तथा च तयोः एकजातीय-संबंधेन सर्वत्र विद्यमानत्वात्र-व्याप्तिः ।

र्थात् पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका पृथिवी इतरभेदवती इत्याकारकानुमितिर्जायत इति तत्त्वम् । यथा जलमिति। जलमितरभेदाभावव्यापकगन्धाभाववदिति। न चेयं तथेति। इतरभेदाभावव्यापकीभूतगन्धाभाववती न, किंतु तदभावाभाववत्त्वाद्गन्धवतीत्यर्थः। तस्मान्न तथेति। तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन तस्मादिति पञ्चम्यन्ताद्गन्धवत्त्वादित्यर्थोपलब्धेस्तथेतरभेदाभाववतीत्यस्यायं भावः । तथा चेतरभेदाभावाभाववतीतरभेदवतीत्यर्थः ॥

[ ४९ ]

संदिग्धसाध्यवान्पक्षः । यथा धूमवत्त्वे हेतौ पर्वतः ॥

त. दी.—पक्षलक्षणमाह—संदिग्धेति । ननु श्रवणानन्तरभाविमननस्थलेऽव्याप्तिः । तत्र वेदवाक्यैरात्मनो निश्चितत्वेन संदेहाभावात्किंच प्रत्यक्षेऽपि वह्नौ यत्रेच्छयानुमितिस्तत्राप्यव्याप्तिरिति चेन्न । उक्तपक्षताश्रयत्वस्य पक्षलक्षणत्वात् ॥

न्या. बो.—पक्षलक्षणमाह—संदिग्धसाध्येति । साध्यप्रकारकसंदेहविशेष्यत्वं पक्षत्वम् । संदेहश्च पर्वतो वह्निमान्न वा इत्याकारकः । अनुमितेः पूर्वं साध्यसंदेहो नियमेन पक्षे जायत इत्यभिप्रायेणेदं लक्षणं प्राचीनैः कृतम् । गगनविशेष्यकमेघप्रकारकसंदेहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन गगनं मेघवदित्याकारकानुमितिर्जायते । गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघवत्त्वावच्छिन्नविधेयताकानुमितिदर्शनात्प्राचीनमतं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्वमिति स्थिरीकृतम् ॥

[ ५० ]

निश्चितसाध्यवान्सपक्षः । यथा तत्रैव महानसः ॥

त. दी.—सपक्षलक्षणमाह—निश्चितेति ॥

---

1 The following passage seems to be corrupt. The reading of O, K is adopted. S U and W give a materially different reading.

न्या. बो.—सपक्षलक्षणमाह–निश्चितसाध्येति। साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम्। निश्चयश्च महानसो वह्निमानित्याकारकः॥

[ ५१ ]

निश्चितसाध्याभाववान्विपक्षः। यथा तत्रैव महाह्रदः॥

त. दी. —विपक्षलक्षणमाह—निश्चितेति॥

न्या. बो.—विपक्षलक्षणमाह–निश्चितेति। साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम्। निश्चयश्च ह्रदो वह्न्यभाववानित्याकारकः॥

[ ५२ ]

सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः।

त. दी.—एवं सद्धेतुं निरूप्यासद्धेतुं निरूपयितुं विभजते—सव्यभिचारेति। अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्व

न्या. बो.—एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति—सव्यभिचारेति। हेतुवदाभासन्त इति हेत्वाभासाः दुष्टहेतव इत्यर्थः। दोष व्यभिचारविरोधप्रतिपक्षासिद्धिबाधाः। तद्विशिष्टा दुष्टहेतव इत्यर्थः हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानाप्रतिबन्धो जायते। अतो वादिनिग्रहार्थं वादिनोद्भावितहेतौ दोषोद्भावनार्थं दुष्टहे निरूपणमिति भावः॥

[ ५३ ]

सव्यभिचारोऽनैकान्तिकः। स त्रिविधः। साधारणासाधारणानुपसंहारिभेदात्। तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः। यथा पर्वतो वह्निमान्प्रमेयत्वादिति प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात्। सर्वसपक्षविपक्षव्यावृत्तोऽसाधारणः

1 O F K Q and V omit the sentence.

2 G J omit °विपक्ष°; Q insert पक्षमात्रवृत्तिः before असाधारण

यथा शब्दो नित्यः शब्दत्वादिति । शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति । अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी। यथा सर्वमनित्यं प्रमेयत्वादिति । अत्र सर्वस्यापि पक्षत्वाद्दृष्टान्तो नास्ति ॥

त. दी.—सव्यभिचारं विभजते—**स त्रिविध** इति। असाधारणं लक्षयति—**तत्रे**ति। उदाहरति—**यथे**ति। असाधारणं लक्षयति—**सर्वे**ति। अनुपसंहारिणो लक्षणमाह—**अन्वये**ति ॥

**न्या. बो.**—सव्यभिचारं विभज्य दर्शयति—**साधारणे**ति। साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम्। साधारणत्वं साध्याभाववद्वृत्तित्वम्। पर्वतो वह्निमान्प्रमेयत्वादित्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वह्न्यभाववदवृत्तित्वरूपव्याप्तिग्रहप्रतिबन्धः फलम्। **असाधारण** इति। सर्वसपक्षविपक्षव्यावृत्तत्वम् साध्यवद्वृत्तित्वावच्छिन्नप्रतियोगिताकाभावः।हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम्॥ अनुपसंहारिणं लक्षयति—**अन्वये**ति। उभयदृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः । सर्वस्यैव पक्षत्वात् पक्षातिरिक्ताप्रसिद्धेरितिभावः ॥

[ ५४ ]

साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा शब्दो नित्यः कृतकत्वादिति। कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥

त. दी.—विरुद्धं लक्षयति—**साध्ये**ति ॥

---

1 G J omit अनित्येभ्यश्च.

2 The passage from सव्यभिचारं विभज्य to °वृत्तित्वम् is not found in O K R V.

3 The sentence is omitted in O K R and V; U has निश्चितसाध्यवदवृत्तित्वम्.

न्या. बो.—विरुद्धं लक्षयति—साध्याभावव्याप्त इति । साध्याभावव्याप्तिः साध्याभावनिरूपितव्यतिरेकव्याप्तिः साध्यव्यापकीभूताभावप्रतियोगित्वम् । तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात्पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम् ॥

[ ५५ ]

यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः । यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववदिति । शब्दोऽनित्यः कार्यत्वाद्घटवदिति ॥

त. दी.—सत्प्रतिपक्षं लक्षयति—यस्येति ॥

न्या. बो.—एवं सत्प्रतिपक्षेऽपि । विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु विरुद्धे हेतोरेकत्वेन सत्प्रतिपक्षे हेतोर्द्वित्वेन च ज्ञातव्यः । सत्प्रतिपक्षं लक्षयति—यस्येति । साध्याभावसाधको हेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि भवति ॥

[ ५६ ]

असिद्धस्त्रिविधः । आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति । आश्रयासिद्धो यथा गगनारविन्दं सुरभ्यरविन्दत्वात्सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः । स च नास्त्येव । स्वरूपासिद्धो यथा शब्दो गुणश्चाक्षुषत्वात् । अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् । सोपाधिको व्याप्यत्वासिद्धः साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्नि-

---

1 A B place यस्य after हेत्वन्तरं; B omits विद्यते; G has विद्यते यस्य.

2 Q has अनित्यः for गुणः, and adds रूपवत्.

3 A B C D F and Q insert हेतुः after सोपाधिकः.

4 C H Q U and W have व्यापकत्वमुपाधिः, while E reads °व्यापकत्वमुपाधित्वम्.

ष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । पर्वतो धूमवान्वह्निमत्त्वादित्यत्रार्द्रेन्धनसंयोग उपाधिः । तथाहि[1] । यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्त्ययोगोलक आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकता । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम् ॥

**त. दी.**—आसिद्धं विभजते—**असिद्ध** इति ॥ आश्रयासिद्धमुदाहरति—**गगनेति** ॥ स्वरूपासिद्धमुदाहरति—**शब्देति** ॥ व्याप्यत्वासिद्धस्य लक्षणमाह—**सोपाधिक** इति । उपाधिलक्षणमाह—**साध्येति** । उपाधिश्चतुर्विधः । केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापक उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । आद्य आर्द्रेन्धनसंयोगः । द्वितीयो यथा–वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र[3] बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम्[4] । तृतीयो यथा–प्रध्वंसो[5] विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् । चतुर्थो यथा–प्रागभावो विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् ॥

**न्या. बो.**—**आश्रयासिद्ध** इति । आश्रयासिद्धिर्नाम पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धिः । यथा गगनीयत्वविशिष्टपक्षासिद्धेः सौर-

---

1 Some copies omit तथाहि.

2 C H K X and W omit इति साधनाव्यापकता.

3 For प्रत्यक्षस्पर्शाश्रयत्वात् C J L M Y Z read प्रमेयत्वात् which is perhaps batter.

4 G here adds स यथा मैत्रीतनयत्वादिश्यत्र मैत्रीतनयत्वावच्छिन्नश्यामत्वस्य व्यापकः शाकाद्याहारपरिणतिभेदः । प्रकारान्तरेण तृतीयो यथा; but this is undoubtedly interpolated.

5 J N M Q and Y read प्रागभाव for प्रध्वंस and are supported by the high authority of *Nil*. See Note *loc. cit.*

म्यानुमितिर्न संभवति । स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः । तथा च हेत्वभावविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शानुत्पत्त्या परामर्शप्रतिबन्धः फलम् ॥ व्याप्यत्वासिद्ध इति । प्रकृते धूमव्यापकत्वमार्द्रेन्धने संयोगे गृहीतं चेद्धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम् । एवं वह्निव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीते तदेव व्यभिचारित्वम् । तथा चोपाधिव्यभिचारित्वं साधने गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचारित्वं गृहीतमेव । अनुमानप्रकारश्च पूर्वानुमानहेतुं पक्षीकृत्य वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वाद्घटत्वादिवद्यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारी । एवं प्रकारेण प्रकृतानुमानहेतुभूतपक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम् । तथा च धूमाभाववद्वृत्तित्वरूपधूमव्यभिचारे गृहीते वह्नौ धूमाभाववदवृत्तित्वरूपव्याप्तिग्रहप्रतिबन्धः फलम् । न च व्याप्यत्वासिद्धेर्व्यभिचाराभेद इति वाच्यम् । धूमाभाववद्वृत्तित्वाभावाभावत्वेन व्याप्यत्वासिद्धत्वं धूमाभाववद्वृत्तित्वेन व्यभिचारत्वमिति भेदात् ॥

[ ५७ ]

यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः । यथा वह्निरनुष्णो द्रव्यत्वादिति । अत्रानुष्णत्वं साध्यं तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यत इति बाधितत्वम् ॥

त. दी.—बाधितस्य लक्षणमाह—यस्येति । अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रति-

1 U and W read the passage differently.

2 O K R V omit the following *two sentences.*

3 K reads पदार्थत्वात् for द्रव्यत्वात्.

4 The reading adopted is that of A D E K; G H J read प्रत्यक्षेण only which amounts to the same. B has स्पर्शेन प्रत्यक्षेण, and O स्पर्शनेन. Sc. seems to prefer the latter. Possibly both स्पार्शन and स्पर्शेन may have been later insertions. See Note *loc. cit.*

बन्धकत्वम् । इतरेषां तु परामर्शप्रतिबन्धकत्वम् । तत्रापि साधारणस्याव्यभिचाराभावतया विरुद्धस्य सामानाधिकरण्याभावतया व्यापकत्वासिद्धस्य विशिष्टव्याप्त्यभावतयाऽसाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेन च व्याप्तिज्ञानप्रतिबन्धकत्वम् । आश्रयासिद्धस्वरूपासिद्ध्योः पक्षधर्मताज्ञानप्रतिबन्धकत्वम् । उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः । सिद्धसाधनं तु पक्षताविघटतया आश्रयासिद्धेऽन्तर्भवतीति प्राञ्चः । निग्रहस्थानान्तरमिति नवीनाः ।

न्या. बो.—यस्येति । यस्य हेतोः साध्याभावः स च प्रमाणान्तरेण निश्चितः स बाधित इत्यर्थः । तथा च प्रात्यक्षिकसाध्याभावनिश्चयेन साध्यानुमितिप्रतिबन्धः फलम् । बाधितसाध्यकत्वाद्धेतोर्हेतुरपि बाधित इत्युच्यते ॥ इत्यनुमानपरिच्छेदः ॥

## [ ५८ ]

उपमितिकरणमुपमानम् । संज्ञासंज्ञिसंबन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः । तथाहि कश्चिद्गवयशब्दार्थमजानन्कुतश्चिदारण्यकपुरुषाद्गोसदृशो गवय इति श्रुत्वा, वनं गतो, वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यति । तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते ॥

त. दी.—उपमानं लक्षयति—उपमितीति ॥

1 A and Q °भाववत्तया.

2 The reading is that of N and *Nil.* A C L P omit प्राञ्चः leaving इति which then becomes redundant. G J Y Z omit इति प्राञ्चः. A inserts न before निग्रह° and M reads निग्रहस्थानानन्तरम् both of which are clearly wrong.

3 Q N and W omit this sentence. F omits the rest of the passage.

4 A B D omit कश्चित्; K adds पुरुषः; A B D and Q read वाक्यम् for अर्थम्. N has पदार्थं for शब्दार्थम्.

5 K H add वाक्यं after इति.

6 O adds विशिष्टं after सदृशं; H reads सादृश्यविशिष्टं and A and W सदृशपिण्डं; J omits पिण्डं.

**न्या. बो.**—उपमानं लक्षयति उपमितिकरणमिति । उपमितिं लक्षयति—**संज्ञासंज्ञीति** । संज्ञा पदं । संज्ञी पदार्थः । तयोः संबन्धः शक्तिः । तथा च पदपदार्थसंबन्धज्ञानमुपमितिरित्यर्थः । उपमानमतिदेशवाक्यार्थज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः । उपमितिः फलम् । गोसदृशो गवयपदवाच्य इत्याकारकाद्गोसदृशत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकं ज्ञानं जायते तदेव करणम् ॥ इत्युपमानपरिच्छेदः ॥

[ ५९ ]

आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं पदसमूहः । यथा गामानयेति । शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः ॥

**त. दी.**—शब्दं लक्षयति—**आप्तेति**[1] । पदलक्षणमाह—**शक्तमिति** । अर्थस्मृत्यनुकूलः पदपदार्थसंबन्धः शक्तिः । सा च पदार्थान्तरमिति मीमांसकाः । तन्निरासार्थमाह—**अस्मादिति** । डित्थादीनामिव घटादीनामपि संकेत एव शक्तिः, न तु पदार्थान्तरमित्यर्थः ॥ गवादिशब्दानां जातावेव शक्तिर्विशेषणतया जातेः प्रथममुपस्थितत्वात् व्यक्तिलाभस्त्वाक्षेपादिना इति केचित् । तन्न, गामानयेत्यादौ वृद्धव्यवहारात्सर्वत्रानयनादेर्व्यक्तावेव संभवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात् । शक्तिग्रहश्च वृद्धव्यवहारेण । व्युत्पित्सुर्बालो गामानयेत्युत्तमवृद्धवाक्यश्रवणान्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्याश्वमानय गां बधान इति वाक्यांतर आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिरश्वशब्दस्याश्वत्वविशिष्टे शक्तिरिति व्युत्पद्यते । ननु सर्वत्र कार्यपरत्वाद्व्यवहारस्य कार्यवाक्य एव व्युत्पत्तिर्न सिद्धपर इति चेन्न । काश्यां त्रिभुवनतिलको भूपतिरित्यादौ

---

1 W omits this. Q adds शुक्लां दण्डेन after आनय.

2 A B D and F insert इच्छा after ईश्वर unnecessarily. O more correctly reads ईश्वरेच्छारूपसंकेतः.

3 N and Q here add वाक्यं लक्षयति-वाक्येति.

4 F and Q have वृद्धव्यवहारेण.

5 A and M read कार्यवाक्यं.

सिद्धेऽपि व्यवहारात्,विकसितपद्मे मधुकरं इत्यादौ प्रसिद्धपदसमभिव्यवहारात्सिद्धेऽपि मधुकरादिपदे व्युत्पत्तिदर्शनाच्च॥ लक्षणापि शब्दवृत्तिः। शक्यसंबंधो लक्षणा। गङ्गायां घोप इत्यत्र गङ्गापदवाच्यप्रवाहसंबन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्यते। सैन्धवादौ लवणाश्वयोः परस्परसंबन्धाभावान्नानाशक्तिकल्पनम्॥ लक्षणा त्रिविधा। जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति। यत्र वाच्यार्थस्यान्वयाभावस्तत्र जहती, यथा मञ्चाः क्रोशन्तीति। यत्र वाच्यार्थस्यान्वयस्तत्राजहती, यथा छत्रिणो गच्छन्तीति। यत्र वाच्यैकदेशत्यागेनैकदेशान्वयस्तत्र जहदजहती यथा तत्त्वमसीति[2]। गौण्यपि लक्षणैव लक्ष्यमाणगुणसंबन्धरूपा। अग्निर्माणवक इति॥ व्यञ्जनापि शक्तिलक्षणान्तर्भूता। अर्थशक्तिमूला चानुमानादिनान्यथासिद्धा[3]॥

तात्पर्यानुपपत्तिर्लक्षणाबीजम्। तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यम्। तात्पर्यज्ञानं च वाक्यार्थज्ञाने हेतुः। नानार्थानुरोधात्तु प्रकरणादिकं तात्पर्यग्राहकम्। द्वारमित्यादौ पिधेहीति शब्दाध्याहारः। नन्वर्थज्ञानार्थत्वाच्छब्दस्यार्थमविज्ञाय शब्दाध्याहारासंभवादर्थाध्याहार एव युक्त इति चेन्न, पदविशेषजन्यपदार्थोपस्थितेः शाब्दज्ञानहेतुत्वात्। अन्यथा घटः कर्मत्वमानयनं कृतिरित्यत्रापि शाब्दज्ञानप्रसङ्गात्॥

पङ्कजादिपदेषु योगरूढिः। अवयवशक्तिर्योगः। समुदायशक्ती रूढिः। नियतपद्मत्वज्ञानार्थं समुदायशक्तिः। अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गः। इतरान्विते शक्तिरिति प्राभाकराः। अन्वयस्य वाक्यार्थतया भानसंभवादन्वयांशेऽपि शक्तिर्न कल्पनीयेति गौतमीयाः॥

---

1 M N F and Q add मधूनि पिबति after मधुकरः but wrongly; J supplies the ellipsis by तिष्ठति more correctly. A reads सिद्ध for प्रसिद्ध incorrectly.

2 G here adds सोऽयं देवदत्त इति च.

3 The text of T D is here undoubtedly tampered with. J alone gives the reading adopt- [illegible] correct one as it is supported by *Nil.* A L omit शक्ति before लक्षणान्तर्भूता. A L O P make अर्थशक्तिमूला च part of the previous sentence, F N and Q add शब्दशक्तिमूला before and M पदशक्तिमूला after अर्थशक्तिमूला. Q V Z make the two sentences one. Y Z have मूलत्वात् and मूलत्वात् for मूला and

न्या. बो.—शब्दं लक्षयति—आप्तेति[1]। पदज्ञानं करणम्। वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः। वाक्यार्थज्ञानं शाब्दबोधः फलम्। वृत्तिर्नाम शक्तिलक्षणान्यतररूपा। शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारकेश्वरसंकेतः। ईश्वरसंकेतो नामेश्वरेच्छा सैव शक्तिरित्यर्थः[2]। शक्तिनिरूपकत्वमेव पदे शक्तत्वम्। विषयतासंबन्धेन शक्त्याश्रयत्वमर्थे शक्यत्वम्। शक्यसंबन्धो लक्षणा। सा द्विविधा। गौणी शुद्धा चेति। गौणी नाम सादृश्यविशिष्टलक्षणा यथा सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा। शुद्धापि द्विधा जहल्लक्षणाऽजहल्लक्षणा चेति[3]। लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधिका जहल्लक्षणा यथा गङ्गायां घोष इत्यत्र गङ्गापद शक्यप्रवाहसंबन्धस्य तीरे सत्त्वात्, तादृशशक्यसंबन्धरूपलक्षणाज्ञाना गङ्गापदात्तीरोपस्थितिः। लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभय बोधप्रयोजिकाऽजहल्लक्षणा। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काक पदस्य दध्युपघातके लक्षणा। लक्ष्यतावच्छेदकं दध्युपघातकत्वं, ते रूपेण दध्युपघातकानां काकबिडालकुक्कुटसारमेयादीनां शक्यलक्ष्याण सर्वेषां बोधात्। जहदजहल्लक्षणा वेदान्तिनां मते[4]॥

[ ६० ]

आकाङ्क्षा योग्यता संनिधिश्च वाक्यार्थज्ञानहेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा। अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं संनिधिः॥

---

1 S T and W insert here six sentences explaining the पदकृत्य of the definition of शब्दः but they are absent in older Mss. U prints them in brackets as an interpolation.

2 The reading is that of U V and K. K omits शक्तिर्नाम, and T and W omit घटादिविशेष्यक; while C reads simply शक्तिर्नामेश्वरेच्छा। सैव शक्तिरित्यर्थः.

3 S T and W read त्रिविधा for द्विविधा and add जहदजहल्लक्षणा as a third species.

4 In the place of this short sentence S T and W have शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधनाज्जहदजहल्लक्षणा। इयं च लक्षणा जीवब्रह्मणोरैक्यं वदतां वेदान्तिनां सिद्धान्तरीत्या.

**त. दी.—आकाङ्क्षेति**। आकाङ्क्षादिज्ञानमित्यर्थः। अन्यथाकाङ्क्षादिभ्रमाच्छाब्दभ्रमो न स्यात्। आकाङ्क्षां लक्षयति—**पदस्येति**॥ योग्यतालक्षणमाह—**अर्थेति**॥ संनिधिलक्षणमाह—**पदानामिति**। अविलम्बेन पदार्थोपस्थितिः संनिधिः। उच्चारणं तु तदुपयोगितया युक्तम्॥

**न्या. बो.—आकाङ्क्षेति**। अव्यवहितोत्तरत्वादिसंबन्धेन यत्पदे यत्पदप्रकारज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकाङ्क्षा। तादृशाकाङ्क्षाज्ञानं शाब्दबोधे कारणम्॥ **अर्थाबाध इति**। बाधाभावो योग्यतेत्यर्थः॥

## [ ६१ ]

आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा गौरश्वः पुरुषो हस्तीति न प्रमाणमाकाङ्क्षाविरहात्। अग्निना सिञ्चेदिति न प्रमाणं योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं सांनिध्याभावात्॥

**त. दी.—गौरश्व** इति। घटः कर्मत्वमित्यनाकाङ्क्षोदाहरणं द्रष्टव्यम्॥

**न्या. बो.—अग्निना सिञ्चेदिति**। अत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः संभवति॥ संनिधिं निरूपयति—**असहोच्चारितानी**ति॥ असहोच्चारितानि विलम्बेनोच्चारितानि॥

## [ ६२ ]

वाक्यं द्विविधम्। वैदिकं लौकिकं च। वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्। अन्यदप्रमाणम्॥

**त. दी.—**वाक्यं विभजते—**वाक्यमिति**। वैदिकस्य विशेषमाह—

1 B prefixes यत्पदविशेष्यक to अव्यवहित°.

2 B U and W here insert a long explanation of आकांक्षा.

3 C H read संनिध्यभावाद् perhaps better.

**वैदिकमीश्वरोक्तत्वादिति** । नन्‌ वेदस्यानादित्वात्कथमीश्वरोक्तत्वमिति चेन्न । वेदः पौरुषेयो वाक्यसमूहत्वाद्भारतादिवत्[1] । न च स्मर्यमाणकर्तृत्वमुपाधिः । गौतमादिभिः शिष्यपरंपरया वेदेऽपि कर्तृस्मरणेन[2] साधनव्यापकत्वात् । "तस्मात्तेपानात्[3]त्रयो वेदा अजायन्त" इति श्रुतेश्च ॥

ननु वर्णा नित्याः 'स एवायं गकार' इति प्रत्यभिज्ञाबलात् । तथा च कथं वेदस्यानित्यत्वमिति चेन्न, उत्पन्नो गकारो नष्टो गकार इति प्रतीत्या वर्णानामनित्यत्वात् 'सोऽयं गकार' इति प्रत्यभिज्ञायाः सेयं दीपज्वालेतिवत्साजात्यावलम्बनत्वात्[4], वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्यानित्यत्वाच्च । तस्मादीश्वरोक्तो वेदः ॥ मन्वादिस्मृतीनामाचाराणां च वेदमूलकतया प्रामाण्यम् । स्मृतिमूलवाक्यानामिदानीमनध्ययनात्तन्मूलभूता काचिच्छाखोच्छिन्नेति कल्प्यते । ननु पठ्यमानवेदवाक्योत्सादस्य कल्पयितुमशक्यतया विप्रकीर्णवादस्यायुक्तत्वान्नित्यानुमेयो वेदो मूलमिति चेन्न । तथापि[5] वर्णानुपूर्वीज्ञानाभावेन बोधकत्वासंभवात् ॥

**न्या. बो.—वैदिकं लौकिकं चेति** ॥ वैदिकं वेदवाक्यमित्यर्थः । इदमुपलक्षणम् । वेदमूलकस्मृत्यादीन्यपि ग्राह्याणि । **लौकिकमिति** । वेदवाक्यभिन्नमित्यर्थः । आप्तत्वं प्रयोगहेतुभूते यथार्थज्ञानवत्त्वम् ॥ इति शब्दपरिच्छेदः ॥

## [ ६३ ]

वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं शब्दः ॥

**त. दी.**—नन्वेतानि पदानि स्वस्मारितार्थसंसर्गवन्ति आकाङ्क्षादिमत्पदकदम्बकत्वात्, मद्वाक्यवदित्यनुमानादेव संसर्गज्ञानसंभवाच्छब्दो न प्रमाणांतरमिति चेन्न[6] । अनुमित्यपेक्षया शाब्दज्ञानस्य विलक्षणस्य शब्दात्प्रत्येमीत्यनुव्यवसायसाक्षिकस्य सर्वसंमतत्वात्[7] ॥

---

1 N F and Q here add इत्यनुमानेन पौरुषेयत्वसिद्धिः; Z adds इत्यनुमानात्.

2 A reads कर्तुः स्मर्यमाणत्वेन, N F and Q have सकर्तृकत्वस्मरणेन.

3 Q inserts तस्मात् before तेपानात्

4 This is the reading of L and M; C J N P Y Z have the same without इति before प्रत्यभि°; A reads सोऽयं दीप इति प्रत्यभिज्ञानवत्साजात्यावलम्बनत्वात्.

5 A and F have तथा अपि for तथापि.

6 K R and V omit this sentence, while B and W omit the next.

7 F and Q insert here [illegible] इति मतान्तरम्.

नन्वर्थापत्तिरपि प्रमाणान्तरमस्ति 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यत इति चेन्न । देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वादित्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात् । शते पञ्चाशदिति संभवोऽप्यनुमानमेव । इह वटे यक्षस्तिष्ठतीत्यैतिह्यमज्ञातमूलवक्तृकः शब्द एव । चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न मानान्तरम् । तस्मात्प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानि ॥

सर्वेषां ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतो ग्राह्यं परतो वेति विचार्यते । तत्र विप्रतिपत्तिः । ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा । अत्र विधिकोटिः स्वतस्त्वम् । निषेधकोटिः परतस्त्वम् ॥ अनुमानग्राह्यत्वेन सिद्धसाधनतावारणाय यावदिति । 'इदं ज्ञानमप्रमेति' ज्ञानेन प्रामाण्यग्रहाद्बाधवारणायाप्रामाण्याग्राहकेति । इदं ज्ञानमप्रमेत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्याप्रामाण्याग्राहकत्वाभावात्स्वतस्त्वं न स्यादतस्तदिति । तस्मिन्प्रामाण्याश्रयेऽप्रामाण्यग्राहक इत्यर्थः । उदाहृतस्थले व्यवसायेऽप्रामाण्यग्राहकस्याप्यनुव्यवसाये तदग्राहकत्वात्स्वतस्त्वसिद्धिः ॥ ननु स्वत एव प्रामाण्यं गृह्यते, घटमहं जानामीत्यनुव्यवसायेन घटघटत्वयोरिव तत्संबन्धस्यापि विषयीकरणात्, व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्, पुरोवर्तिनि प्रकारसंबन्धस्यैव प्रमात्वपदार्थत्वादिति चेन्न । स्वतःप्रामाण्यग्रहे जलज्ञानं प्रमा न वेत्यनभ्यासदशायां प्रमात्वसंशयो न स्यात् । अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात् । तस्मात्स्वतोग्राह्यत्वाभावात्परतो ग्राह्यत्वम् । तथाहि । प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां, जललाभे सति पूर्वोत्पन्नं जलज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवम्, यथा प्रमा, इति व्यतिरेकिणा प्रमात्वं निश्चीयते।

---

1 A here adds अनुपलब्धिर्न मानम् । परिशेषोऽपि अनुमान्यैव, but the words seem to be spurious as no other copy contains them. They are also superfluous, as अनुपलब्धि has already once been referred to, while it is doubtful whether परिशेष is recognized as an independent proof.

द्वितीयादिज्ञानेषु पूर्वज्ञानदृष्टान्तेन तज्जातीयत्वलिङ्गेनान्वयव्यतिरेकिणाऽपि गृह्यते ॥

प्रमायाः गुणजन्यत्वमुत्पत्तौ परतस्त्वम् । प्रमाऽसाधारणकारणं गुणः । अप्रमाऽसाधारणकारणं दोषः । तत्र प्रत्यक्षे विशेषणवद्विशेष्यसंनिकर्षो गुणः, अनुमितौ व्यापकवति व्याप्यज्ञानं, उपमितौ यथार्थसादृश्यज्ञानं, शाब्दज्ञाने यथार्थयोग्यताज्ञानम् इत्याद्यूहनीयम् । पुरोवर्तिनि प्रकाराभावस्य व्यवसायेनानुपस्थितत्वादप्रमात्वं परत एव गृह्यते । पित्तादिदोषजन्यत्वादुत्पत्तौ परतस्त्वम् ॥

ननु सर्वज्ञानानां यथार्थत्वादयथार्थज्ञानमेव नास्ति । न च 'शुक्ताविदं रजतमिति ' ज्ञानात्प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति वाच्यम् । रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिसंभवात् उपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन नेदं रजतमित्यादावतिप्रसङ्गाभावादिति चेन्न । सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात् ॥

[ ६४ ]

अयथार्थानुभवस्त्रिविधः संशयविपर्ययतर्कभेदात् । एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहि[1] ज्ञानं संशयः । यथा स्थाणुर्वा पुरुषो वेति । मिथ्याज्ञानं विपर्ययः । यथा शुक्ताविदं रजतमिति । व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति[2] ॥

त. दी.–अयथार्थानुभवं विभजते–अयथार्थेति । स्वप्नस्य मानसविपर्ययरूपत्वान्न त्रैविध्यविरोधः ॥ संशयलक्षणमाह–एकस्मिन्निति । 'घटपटा'विति समूहालम्बनेऽतिव्याप्तिवारणाय एकेति । 'घटो द्रव्य'मित्याद्याव-

1 The passage is variously worded in different copies. The reading in the text is that of A B D F U and Sc; O G H Q and W have °वैशिष्ट्यज्ञानम्, while B J read °विशिष्टज्ञानम्. E differs from all in giving विरुद्धनानाकोटिकं ज्ञानम्.'

2 X has यदयं निर्वह्निः स्यात्तर्हि निर्धूमोपि स्यात्.

तिव्याप्तिवारणाय-**विरुद्धेति** । 'घटत्वविरुद्धघटत्ववानि'त्यत्रातिव्याप्ति-वारणाय **नानेति** ॥ विपर्ययलक्षणमाह—**मिथ्येति** । तदभाववति तत्प्रकारकनिश्चय इत्यर्थः ॥ तर्कं लक्षयति—**व्याप्येति** । यद्यपि तर्को विपर्ययेऽन्तर्भवति तथापि प्रमाणानुग्राहकत्वाद्भेदेन कीर्तनम् ॥

**न्या. बो.**—यथार्थानुभवं निरूप्यायथार्थानुभवं विभजते—**संशयेत्यादिना** । **एकेति** । एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारकं ज्ञानं संशय इत्यर्थः । भावद्वयकोटिकसंशयप्रसिद्धेः स्थाणुर्वेत्यत्र स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिकः संशय इत्यर्थः[1] । विपर्ययो नाम भ्रम इत्यर्थः ॥ **व्याप्यारोपेणेति** । तर्कं व्याप्यस्य व्यापकस्य च व्यतिरेकनिश्चयः कारणम् । अन्यथाबाधनिश्चयाभाव इष्टापत्तिदोषे तर्कानुत्पत्तेः ॥

## [ ६५ ]

स्मृतिरपि द्विविधा । यथार्थाऽयथार्था च । प्रमाजन्या यथार्था । अप्रमाजन्याऽयथार्था ॥

**त. दी.**—स्मृतिं विभजते—**स्मृतिरिति** ॥

## [ ६६ ]

सर्वेषामनुकूलतया वेदनीयं सुखम् ॥

---

1 C K V omit this sentence, but as besides S T it is found in R also in a slightly different form, it is retained. The sentence as it stands in both S and R is corrupt and is therefore amended as above. S reads स्थाणुर्वेत्यादेः which is not intelligible, while R inserts एक before last कोटिक quite superfluously.

2 U and W read बाध for व्यतिरेक.

3 E H J K omit द्विविधा and join the two sentences. K adds इति after च.

4 It is impossible to ascertain the true reading of this and the next passage. A B C H J U and Q together with Sc. and Vv agree in reading अनुकूलवेदनीयं and प्रतिकूलवेदनीयं respectively; while the other variants अनुकूलतया and प्रतिकूलतया वेदनीयं are found in D E G K, as well as *Nil.* I have adopted the latter as being grammatically more correct, and being supported by the high authority of *Nil.*

**त. दी.**—सुखं लक्षयति—**सर्वेषामिति** । सुख्यहमित्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम् । यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम् ॥

**न्या. बो.**—सुखं निरूपयति—**सर्वेषामिति** । इतरेच्छाऽनधीनेच्छाविषयत्वमिति निष्कर्षः । यथाश्रुतेऽनुकूलत्वप्रकारकवेदनाविशेष्यत्वस्य घटोऽनुकूल इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानाविशेष्यत्वस्य घटादावपि सत्त्वाद्घटादावतिव्याप्तिरिति निष्कृष्टलक्षणमुक्तम् । भोजनादावतिव्याप्तिवारणायेतरेच्छानधीनेच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ॥

[ ६७ ]

सर्वेषां प्रतिकूलतया वेदनीयं दुःखम् ॥

**न्या. बो.**—दुःखं निरूपयति—**प्रतिकूलेति** । अत्रापीतरद्वेषानधीनद्वेषविषयत्वमिति निष्कृष्टलक्षणम् । द्वेषविषयत्वमात्रोक्तौ सर्पादावपि द्वेषविषयत्वसत्वात्तत्रातिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणम् । सर्पजन्यदुःखादौ द्वेषात्सर्पद्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषानधीनद्वेषविषयत्वरूपलक्षणस्य सर्पादावसत्त्वान्नातिव्याप्तिः । फलेच्छोपायेच्छां प्रति कारणं । अतः फलेच्छावशादुपायेच्छा भवति । एवं फलद्वेषादुपायद्वेषः ॥

[ ६८ ]

इच्छा कामः ॥

[ ६९ ]

क्रोधो द्वेषः ॥

[ ७० ]

कृतिः प्रयत्नः ॥

[ ७१ ]

विहितकर्मजन्यो धर्मः[1]॥

---

1 K inserts गुणः after °जन्यः | unnecessarily.

[ ७२ ]

निषिद्धकर्मजन्यस्त्वधर्मः ॥

न्या. बो.—धर्माधर्मौ निरूपयति—विहितेति। वेदविहितेत्यर्थः। निषिद्धेति। वेदनिषिद्धेत्यर्थः ॥

[ ७३ ]

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः ॥

[ ७४ ]

बुद्धीच्छाप्रयत्ना द्विविधाः। नित्या अनित्याश्च। नित्या ईश्वरस्य। अनित्या जीवस्य ॥

[ ७५ ]

संस्कारस्त्रिविधः। वेगो भावना स्थितिस्थापकश्चेति। वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः। अनुभवजन्या स्मृतिहेतुर्भावनाऽऽत्ममात्रवृत्तिः। अन्यथा कृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः ॥

त. दी.—संस्कारं विभजते—संस्कार इति। संस्कारत्वजातिमान्संस्कारः। वेगस्याश्रयमाह—वेग इति। वेगत्वजातिमान्वेगः। भावनां लक्षयति—अनुभवेति। आत्मादावतिव्याप्तिवारणायानुभवेति। अनुभवध्वंसेऽतिव्याप्तिवारणाय स्मृतीति। स्मृतेरपि संस्कारजनकत्वं नवीनैरुक्तम् ॥ स्थितिस्थापकं लक्षयति—अन्यथेति ॥ संख्यादयोऽष्टौ नैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः। अन्ये रूपादयो विशेष-

1 C and X read आत्मनो विशेष°, and K आत्मनि विशेष°; D omits विशेष.

2 G J Q U W X omit द्विविधाः and join the two sentences.

3 O K read स्थितस्थापकः.

4 E J X have वेगास्यः; D G X insert मात्र after मनः.

5 D H J read तादवस्थ्यापादकः; O and Sc. have तद्वस्थापकः.

गुणाः । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्ति-द्रव्यकर्मावृत्ति-जातिमत्त्वं विशेषगुणत्वम् ॥

**न्या. बो.**—संस्कारं विभजते—**संस्कार** इति। भावनां लक्षयति। **अनुभवेति**। अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम्। अत्रानुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनःसंयोगेऽतिव्याप्तिरात्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वादतस्तदुपादानम् । आत्ममनःसंयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः। तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्यत्वात्। अतः स्मृतिहेतुत्वोपादानम्। अनुभवध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिः ॥

[ ७६ ]

चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरसंनिकृष्टसंयोगहेतुराकुञ्चनम् । विप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् । पृथिव्यादिचतुष्टयमनोमात्रवृत्ति ॥

**त. दी.**—कर्मणो लक्षणमाह—**चलनेति**। उत्क्षेपणादीनां कार्यभेदमाह—**ऊर्ध्वेति**। **शरीरेति**। वक्रत्वसंपादकमाकुञ्चनम्। ऋजुतासंपादकं प्रसारणमित्यर्थः ॥

[ ७७ ]

नित्यमेकमनेकानुगतं सामान्यं । द्रव्यगुणकर्मवृत्ति । तद्द्विविधं परापरभेदात् । परं सत्ता । अपरं द्रव्यत्वादिः ॥

---

1 Instead of द्रव्यकर्मावृत्ति N has गुणवृत्ति. Z adds गुण after जातिमत्. Other copies omit the word altogether, but wrongly.

2 K adds तत्पञ्चविधम्.

3 A B D have शरीरस्य; E H J X insert शरीर before विप्रकृष्ट also in the next sentence.

4 K omits मात्र; G J add कर्म after वृत्ति, perhaps better; Q U and W omit the whole sentence.

5 C E G J Q U X and W omit तद्द्विविधं परापरभेदात्. X has instead परमधिकवृत्ति । अपरं न्यूनवृत्ति । H has परमपरं चेति for परापरभेदात्, before द्रव्यगुणकर्मवृत्ति. A B D F insert जातिः before द्रव्यत्वादिः.

**त. दी.**—सामान्यं लक्षयति—**नित्यमिति**। संयोगादावतिव्याप्तिवारणाय **नित्यमिति**[1]। परमाणुपरिमाणादावतिव्याप्तिवारणाय—**अनेकेति**। अनुगतत्वं समवेतत्वं। तेन नाभावादावतिव्याप्तिः॥

**न्या. बो.**—सामान्यं निरूपयति—**नित्यमेकमिति**। नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणमित्यर्थः। नित्यत्वविशेषणानुपादाने संयोगादावतिव्याप्तिस्तत्राप्यनेकद्रव्यसमवेतत्वस्य सत्त्वात् तद्वारणाय नित्यत्वोपादानम्। अनेकसमवेतत्वानुपादान आकाशादावतिव्याप्तिस्तद्वारणायानेकसमवेतत्वविशेषणम्। अनेकत्वानुपादान आकाशगतैकत्वपरिमाणादौ जलपरमाणुरूपादौ चातिव्याप्तिर्जलादिपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात्समवेतत्वाच्च। अतोऽनेक इति समवेतविशेषणम्॥

[ ७८ ]

**नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः॥**

**त. दी.**—विशेषं लक्षयति—**नित्येति**॥

**न्या. बो.**—**नित्यद्रव्यवृत्तय** इति। नित्यद्रव्येषु परमाण्वादिषु वर्तमानाः। अत एव व्यावर्तका इतरभेदानुमितिहेतवः। नित्यद्रव्यवृत्तित्वरूपपक्षधर्मताप्रयोज्येतरभेदानुमापकशालिन इत्यर्थ[4]:॥

[ ७९ ]

**नित्यसंबन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्य एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। यथावयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति[6]॥**

---

1 N places this sentence after the next, omitting आदि. Other copies except A J Y omit the sentence altogether. Y omits the next sentence. Q and F insert घटात्यन्ताभावो घटायत्त-गतोऽप्यसमवेतः before तेन नाभावा°.

2 The passage is variously read by K R V S U and W. Mss. G and V end here.

3 E G H K add अनंता एव after विशेषाः; X adds पृथिव्यादिचतुष्टयस्य परमाणवः आकाशादिपञ्चकं नित्यद्रव्याणि।

4 This is a portion of a long abstruse passage in W not found in other Mss.

5 A B E J omit अविनश्यत् which is however necessary.

6 E G J only insert यथा; but their reading has been adopted as making the sentence more grammatical.

